कद्रू[1]विनोदेन सुखातिसंभ्रमान्,
निद्रां जगामालसमीलितेक्षणः ॥ २२० ॥

**यथा वा–**

कम्पायमाना सखि ! सर्वतो दिशं,
शम्पां दधाना नवनीरदावलिः ।
कम्पायितं संविदधाति मानसं,
मां पाहि नन्दस्य सुतं समानय ॥ २२१ ॥

**इति इन्द्रवंशा १०३.**

**१०४. अथानयोरुपजातयः**

यदीन्द्रवंशाचरणेन सङ्गता[2],
पादोऽपि वंशस्थविलस्य जायते ।
भेदास्तदा स्युः सुरराजसंख्यकाः,
नागोदितास्तेप्युपजातिसंज्ञकाः ॥ २२२ ॥

**इति वंशस्थविलेन्द्रवंशोपजातिः*[1] ।**

अनयोरप्येकत्र प्रथमाक्षरं लघुः, अपरत्र च प्रथमाक्षरं गुरुरिति स्वल्पभेदत्वाच्चतुर्दशोपजातिभेदाः पूर्ववदेव प्रस्ताररचनया भवन्ति । तथा चात्र सर्वत्र स्वल्पभेदाच्छन्दोभ्यामुपजातयो भवन्तीति उपदिश्यत इति दिक् ।

---

१. ख. कुण्डविनोदेन । २. ख. सङ्गतः ।

*टिप्पणी—१ क. ख. प्रतौ वंशस्थविलेन्द्रवंशोपजातेरुदाहरणं न विद्यते ।

*टिप्पणी—२ ग्रन्थकारेण वंशस्थविलेन्द्रवंशोपजातेर्यंतस्य चतुर्दशभेदाः स्वीकृताः, परं तत्तद्भेदानां लक्षणोदाहरणादिभिः प्रतिपादनं नैव कृतम् । अतोऽत्रास्माभिरन्यग्रन्थाधारेण तत्तन्नामलक्षणोदाहरणानि प्रस्तूयन्ते ।

| | | | |
|---|---|---|---|
| १. वैरासिकी | [वं. इ. इ. इ ] | ८. वासन्तिका | [इ. इ. इ. वं.] |
| २. रताख्यानिकी | [इ. वं. इ. इ.] | ९. मन्दहासा | [वं. इ. इ. वं.] |
| ३. इन्दुमा | [वं. वं. इ. इ.] | १०. शिशिरा | [इ. वं. इ. वं.] |
| ४. पुष्टिदा | [इ. इ. वं. इ.] | ११. वैधात्री | [वं. वं. इ. वं.] |
| ५. उपमेया | [वं. इ. व. इ.] | १२. शङ्खचूडा | [इ. इ. वं. वं.] |
| ६. सौरभेयी | [इ. वं. वं. इ.] | १३. रमणा | [वं. इ. वं. वं.] |
| ७. शीलातुरा | [वं. वं. वं. इ.] | १४. कुमारी | [इ. वं. वं. वं.] |

१. वैरासिकी—

वं. महाचमूनामधिपाः समन्ततः,
इ. संनह्य सद्यः सुतरामुदायुधाः ।
इ. तस्थुर्विनम्रक्षितिपालसङ्कुले,
इ. तस्याङ्गणद्वारि बहिःप्रकोष्ठके ।।

[कुमारसम्भव १५।६]

२. रताख्यानिकी—

इ. पद्मैरनन्वीतवधूमुखद्युतो,
वं. गता न हंसैः श्रियमातपत्रजाम् ।
इ. दूरेऽभवन् भोजबलस्य गच्छतः,
इ. शैलोपमातीतगजस्य निम्नगाः ।।

[शिशुपालवधम् १२।६१]

३. इन्दुमा—

वं. चमूप्रभुं मन्मथमर्दनात्मजं,
वं. विजित्वरीभिर्विजयश्रियाश्रितम् ।
इ. श्रुत्वा सुराणां पृतनाभिरागतं,
इ चित्ते चिरं चुक्षुभिरे महासुराः ।।

[कुमारसम्भव १५।२]

४. पुष्टिदा—

इ. श्रुत्वेति वाचं वियतो गरीयसीं,
इ. क्रोधादहङ्कारपरो महासुरः ।
वं. प्रकम्पिताशेषजगत्त्रयोऽपि स-
इ. न्नाकम्पतोच्चैर्दिवमभ्यधाच्च सः ।

[कुमारसम्भव १५।३९]

५. उपमेया [रामणीयकम्]—

वं. नितान्तमुत्तुङ्गतुरङ्गहेषितै-
इ. रुद्दामदानद्विपबृंहितैः शतैः ।
वं. चलद्ध्वजस्यन्दननेमिनिःस्वनै-
इ. श्चाभून्निरुच्छ्वासमथाकुलं नभः ।

[कुमारसम्भव १४।४१]

६. सौरभेयी—

इ. सङ्गेन वो गर्भतपस्विनः शिशु
वं. र्वराक एषोऽन्तमवाप्स्यति ध्रुवम् ।
वं. अतस्करस्तस्करसङ्गतो यथो,
इ. तद्वो निहन्मि प्रथमं ततोप्यमुम् ।

[कुमारसम्भव १५।२]

७. शीलातुरा—

वं. निवार्यमाणैरभितोनुयायिभि-
वं. र्ग्रहीतुकामैरिव तं मुहुर्मुहुः ।
वं. अपाति गृध्रैरभिमौलि चाकुलै-
इ. र्भविष्यदेतन्मरणोपदेशिभिः ।

[कुमारसम्भव १५।२६]

८. वासन्तिका—

इ. अभ्याजतोऽभ्यागततूर्णतर्णका-
इ. न्निर्याणहस्तस्य पुरो दुधुक्षतः ।
इ. वर्गाद्गवां हुंकृतिचारु निर्यती-
वं. रर्मधोरैक्षत गोमतल्लिकाम् ।

[शिशुपालवध १२।४१]

९. मन्दहासा—

वं. न जामदग्न्यः क्षयकालरात्रिकृत्,
इ. स क्षत्रियाणां समराय वल्गति ।
इ. येन त्रिलोकीसुभटेन तेन ते,
वं. कुतोऽवकाशः सह विग्रहग्रहे ।

[कुमारसम्भव १५।३७]

१०. शिशिरा—

इ. साऽवज्ञमुन्मील्य विलोचने सकृत्,
वं. क्षणं मृगेन्द्रेण सुषुप्सुना पुनः ।
इ. सैन्यान्न यातः समयाऽपि विव्यथे,
वं. कथं सुराजम्भवमन्यथाऽथवा ।

[शिशुपालवध १२।५२]

११. वैधात्री—

वं. प्रयान्ति मन्त्रः(न्त्रैः) प्रशमं भुजङ्गमा-
वं. न मन्त्रसाध्यास्तु भवन्ति धातवः ।
इ. केचिच्च कञ्चिच्च दशन्ति पन्नगाः,
वं. सदा च सर्वं च तुदन्ति धातवः ।

[सौन्दरानन्द ]

१२. शङ्खचूडा—

इ. निम्नाः प्रदेशाः स्थलतामुपागमन्,
इ. निम्नत्वमुच्चैरपि सर्वतश्च ते ।
वं. तुरङ्गमाणां व्रजतां खुरैः क्षता-
वं. रथैर्गजेन्द्रैः परितः समीकृताः ॥

[कुमारसम्भव १४।४४]

**१०५. अथ जलोद्धतगतिः**

अवेहि जगणं ततोऽपि सगणं,
विधेहि जगणं पुनश्च सगणम् ।
फणीन्द्रकथिता जलोद्धतगतिः,
चकास्ति हृदये कृतातिसुमतिः ॥ २२३ ॥

यथा–

नवीननलिनोपमाननयनं,
पयोदरुचिरं पयोधिशयनम् ।
नमामि कमलासुसेवितहरिं,
सदा निजहृदा भवाम्बुधितरिम् ॥ २२४ ॥

**इति जलोद्धतगतिः १०५.**

**१०६. अथ वैश्वदेवी**

कर्णा जायन्ते यत्र पूर्वं नियुक्ताः,
वह्नेस्संख्याकाः य-द्वयेन प्रयुक्ताः ।
बाणार्णैश्छिन्ना वाजिभिश्चापि भिन्ना,
नागेनोक्ता सा वैश्वदेवी विभाति ॥ २२५ ॥

यथा–

वन्दे गोविन्दं वारिधौ राजमानं,
श्रीलक्ष्मीकान्तं नागतल्पे शयानम् ।
अत्यन्तं पीतं वस्त्रयुग्मं दधानं,
पार्श्वे तिष्ठंत्या पद्मया सेव्यमानम् ॥ २२६ ॥

**इति वैश्वदेवी १०६.**

---

**१३. रमणा—**

वं. बली बलारातिबलाऽतिशातनं,
इ. दिग्दन्तिनादद्रवनाशनस्वनम् ।
वं. महीधराम्भोधिनवारितक्रमं,
वं. ययौ रथं घोरमथाधिरुह्य सः ॥
[कुमारसम्भव १५।८]

**१४. कुमारी—**

इ. किं ब्रूथ रे व्योमचरा महासुराः,
वं. स्मरारिसूनुप्रतिपक्षवर्तिनः ।
वं. मदीयबाणव्रणवेदना हि सा-
वं. ऽधुना कथं विस्मृतिगोचरीकृता ।
[कुमारसम्भव १५।४०]

### १०७. अथ मन्दाकिनी

इह यदि नगणद्वयं जायते,
तदनु च रगणद्वयं दीयते ।
फणिपमुखसुमेरुमन्दाकिनी,
प्रभवति हि तदैव मन्दाकिनी ।। २२७ ।।

यथा–

सखि ! मम पुरतो मुरारेः कथां,
कुरु न कुरु तथा वृथाऽन्यां कथाम् ।
दि मधुरिपुरेति वृन्दावनं,
कलय मम तदा शरीरावनम् ।। २२८ ।।

इति मन्दाकिनी १०७.

क्वचिदियमेव प्रभेति*[१] नामान्तरं लभते । 'सह शरधि निजं तथा कार्मुकम्' इत्यादि किराते*[२] । यथा वा–'अतिसुरभिरभाजि पुष्पश्रिया' इति माघेऽपि । *[३]

### १०८. अथ कुसुमविचित्रा

विरचय विप्रं तदनु च कर्णं,
पुनरपि तद्वत् कुरु रविवर्णम् ।
श्रुतिमितपादे विमलचरित्रा,
परमपवित्रा कुसुमविचित्रा ।। २२९ ।।

---

*टिप्पणी–१ वृत्तरत्नाकरः अ० ३, का० ६५.

*टिप्पणी–२ सह शरधि निजंस्तथा कार्मुकं
वपुरतनु तथैव संवर्मितम् ।
निहितमपि तथैव पश्यन्नसिं,
वृषभगतिरुपाययौ विस्मयम् ।।

[किरातार्जुनीयम् स० १८, प० १६]

*टिप्पणी–३ अतिसुरभिरभाजि पुष्पश्रिया-
मतनुतरतयेव संतानकः ।
तरुणपरभृतः स्वनं रागिणा-
मतनुत रतये वसन्तानकः ।।

[शिशुपालवधम् स० ६, प० ६७]

यथा–

भययुतचित्तो विगतविलम्बं,
　　कथमपि यातो हरितकदम्बम् ।
तरणिसुतायास्तटभुवि कृष्णः,
　　स जयति गोपीवसनसतृष्णः ॥ २३० ॥

इति कुसुमविचित्रा १०८.

१०९. अथ तामरसम्

सरससुरूपसुगन्धसशोभं,
　　कुचयुगसङ्गमसंवृत[1]लोभम् ।
रसयुतहारयुगाहितमुक्तं,
　　कलयत तामरसं वरवृत्तम् ॥ २३१ ॥

यथा –

विलसति मालतिपुष्पविकासः,
　　न हि हरिदर्शनतो वनवासः ।
सखि ! नवकेतकिकण्टककर्षः,
　　वनकलितोनुतनूरुहहर्षः ॥ २३२ ॥

इति तामरसम् १०९.

११०. अथ मालती

कलय नकारमतोपि नायकौ,
　　तदनु विधारय पक्षिणां पतिम् ।
फणिपतिपिङ्गलनागभाषिता,
　　कविहृदि राजति मालती मता ॥ २३३ ॥

यथा–

कलयति[2] चेतसि नन्ददारकं,
　　सकलवधूजनचित्त[3]हारकम् ।
निखिलविमोहकवेणुधारकं,
　　दितिसुतसङ्घविनाशकारकम् ॥ २३४ ॥

इति मालती ११०

१. ख. संभृतम् । २. ख. कलयत ३. ख. चीरहारकम् ।

कुत्रचिद् इयमेव **यमुना** इति नामान्तरं लभते । 'अयि विजहीहि दृढोपगूहनम्' इत्युदाहरणान्तरं भारविस्थिरम्[१]* ।

**१११. अथ मणिमाला**

आदौ विदधाना हारौ वरमेरू,
युक्ता रववद्भ्यां सन्नूपुरकाभ्याम् ।
कर्णे रसपुष्पोद्यत्कुण्डलयुग्मा,
छिन्ना रसयुक्तैर्वर्णैर्मणिमाला ।। २३५ ।।

*यथा–*

गौरीकृतदेहं व्यालावलिमालं,
नृत्ये विधुनानं कृत्ति पुरकालम् ।
लोलानलकालैः[१] संभूषितभालं,
कामैः शरणं त्वं संप्राप्य शिवालम् ।। २३६ ।।

**इति मणिमाला १११.**

**११२. अथ जलधरमाला**

यस्यामादौ पदविरतौ वा कर्णाः,
पक्षप्रोक्ता दिनकरसंख्यावर्णाः ।
मध्ये विप्रो जलनिधिशैलैश्छिन्ना,
नागप्रोक्ता जलधरमाला भिन्ना ।। २३७ ।।

*यथा–*

शीतैः पुष्पैरभिनवशय्यां कृत्वा,
ताम्यच्चित्ता मलयजमूर्तिं धृत्वा ।
वक्षस्पीठे तव सुचिरं ध्यायन्ती,
तिष्ठत्येषा शठविधिदोषं पश्यन्ती ।। २३८ ।।

**इति जलधरमाला ११२.**

---

१. ख. कीलैः ।

*टिप्पणी—१. अयि विजहीहि दृढोपगूहनं
त्यज नवसङ्गमभीरु ! वल्लभम् ।
अरुणकरोद्गम एष वर्तते,
वरतनु ! संप्रवदन्ति कुक्कुटाः ।।

पद्यमिदं वृत्तमौक्तिककारेण छन्दोमञ्जरीकृता च भारवेः स्वीकृतं किन्तु तत्कृतौ किरातार्जुनीये तु नास्त्युपलब्धिरस्य । अतोऽन्यत्र चोह्यम् ।

### ११३. अथ प्रियंवदा

कुसुमसङ्गतकरा रसाहिता,
विमलगन्धकुचहारभूषिता ।
सरुतनूपुरसुशोभिता सदा,
जयति चेतसि सखे ! प्रियंवदा ॥ २३९ ॥

यथा–

व्रजवधूजनमनोविमोहनं,
सरसकेलिषु कलानिकेतनम् ।
सरसचन्दनविलेपचर्चितं,
कलय चेतसि हरिं सदार्चितम् ॥ २४० ॥

इति प्रियंवदा ११३.

### ११४. अथ ललिता

हारद्वयाचितकुचेन भूषिता,
हस्तस्थितोज्ज्वलसुपुष्पकङ्कणा ।
पादे विरावयुतनूपुराञ्चिता,
चित्ते चकास्ति ललिता विलासिनी ॥ २४१ ॥

यथा–

गोपीषु केलिरससक्तचेतसं,
सूर्यात्मजा विलुलितातिवेतसम् ।
चित्तावमोहकरवेणुधारकं,
वन्दे सदा ललितनन्ददारकम् ॥ २४२ ॥

इति ललिता ११४.

इयमेव अन्यत्र सुललिता इति गणभेदेन उक्तम् । अतएव 'तो भो जरौ सुललिता श्रुतौ यतिः ।' इति वृत्तसारे सयति लक्षणं लक्षितमिति ।

### ११५. अथ ललितम्

धेहि भकारं तदनु च तगणं,
धारय नं वा तदनु च सगणम् ।
बाणविरामं फणिपतिकलितं,
चेतसि वृत्तं कलयत ललितम् ॥ २४३ ॥

यथा–

चेतसि कृष्णं कलयति[१] ललितं,
गोकुलगोपीजनहृदि वलितम् ।
वादितवंशं तरलितमुकुटं,
कारितरासं विनिहतशकटम् ।। २४४ ।।

**इति ललितम् ११५.**

इदमेव अन्यत्र ललना*[१] इत्युक्तम् ।

**११६. अथ कामदत्ता**

द्विजवर-सगणौ विधेहि तूर्णं,
जगणमथ ततोऽपि देहि कर्णम् ।
सरससुकविपिङ्गलेन वित्ता,
लसति कविमुखेषु कामदत्ता ।। २४५ ।।

यथा–

कलपरिमलचञ्चलालिमालं,
सुललितदलमालतीविशालम् ।
वनमिदमलिसंलुलद्रसालं,
हरिमिह हि विना सुखाय नालम् ।। २४६ ।।

**इति कामदत्ता ११६.**

**११७. अथ वसन्तचत्वरम्**

यदा लघुर्गुरुः क्रमेण भासते,
खरांशुवर्णकेन चेद् विकासते ।
फणीन्द्रनागभाषितं सुसत्वरं,
विधेहि मानसे वसन्तचत्वरम् ।। २४७ ।।

यथा–

मुदा विलोलमौलिगोपनायकं,
हृदा सदैव चित्तमोददायकम् ।
यदा विभावयिष्यसि त्वमाशु रे,
तदा सुखे निमज्जितासि[२] भासुरे ।। २४८ ।।

**इति वसन्तचत्वरम् ११७.**

---

१. ख. ख. कलयत । २ ख. निमङ्क्ष्यसि प्रभासुरे ।

*टिप्पणी—१ छन्दःसूत्र टि०पृ० १३७

### ११८. अथ प्रमुदितवदना

सरसकविजनाहिता भाविता,
भवति सुकविपिङ्गलेनोदिता ।
सकलरसिकचित्तहृद्या तदा,
प्रमुदितवदना तु नौ रौ यदा ।। २४९ ।।

यथा–

कलय सखि ! विराजि वृन्दावनं,
सहचरि ! कुरु मे शरीरावनम् ।
यदि कथमपि मानसे भावयेः,
यदुकुलतिलकं तदैवानयेः ।। २५० ।।

इति प्रमुदितवदना ११८.

इयमेव अन्यत्र प्रभा*[1] ।

### ११९. अथ नवमालिनी

सखि ! नवमालिनीं रसविरामां,
ननु कलयालि पूर्वयतियुक्ताम् ।
नजभयकारभावितपदाढ्यां,
फणिपतिनागपिङ्गलविभक्ताम् ।। २५१ ।।

यथा–

इह कलयालि ! नन्दसुतवालं,
नवघनकान्तिनिर्जिततमालम् ।
सरसविलासरासकृतमालं,
मुनिवरयोगिमानसमरालम् ।। २५२ ।।

इति नवमालिनी ११९.

### १२० अथ तरलनयनम्

जलधि-नगणमिह रचयत,
रविमित लघुमिह कलयत ।
सुकविफणिपतिरिति वदति,
तरलनयनमिति हि भवति ।। २५३ ।।

---

*टिप्पणी—१ वृत्तरत्नाकर: अ० ३, का० ६५

यथा–

तव कुसुमनिभहसितमयि,
गततनुमनुकलयति मयि ।
इति हि सखि ! हरिरनुवदति,
परिकलय दृशमयि सुदति ! ॥ २५४ ॥

इति तरलनयनम् १२०.

'अत्र प्रस्तारगत्या द्वादशाक्षरस्य षण्णवत्यधिकं सहस्रचतुष्टयं ४०९६ भेदा भवन्ति, तेषु कियन्तः प्रदर्शिताः शेषभेदाः, सुधीभिः प्रस्तार्य सूचनीया इति[1] ।'*[1]

इति द्वादशाक्षरम् ।

## अथ त्रयोदशाक्षरम्

तत्र–

१२१. वाराहः

यस्मिन् पादे दृश्यन्ते संयुक्ताः षट्कर्णाः,
सूर्याणामेकेनाग्राणां संख्याका वर्णाः ।
कर्णस्यान्ते यस्मिन् संप्रोक्तश्चैको हारः,
सोऽयं नागोक्तो वाराहो वृत्तानां सारः ॥ २५५ ॥

यथा–

कल्पान्तप्रोद्यद्वारां राशौ दृब्धा मग्नं,
यः क्षोणीपृष्ठं दंष्टाग्रे कृत्वा संलग्नम् ।
हत्वा दैत्यं दृप्यन्तं सिन्धोर्मध्यादागात्,
कुर्यात् कालः[2] सोऽयं सर्वेषां रक्षां वेगात् ॥ २५६ ॥

इति वाराहः १२१.

१२२. अथ माया

हारौ कृत्वा स्वर्णसुमेरुद्वययुक्तौ,
प्रत्येकं हस्तौ वलयाभ्यामपि सक्तौ ।
मिथ्याचित्तस्थस्य दधाना[3]वरवर्णे,
माया सर्वेषां हृदये राजति तूर्णे[4] ॥ २५७ ॥

---

१. क. प्रतौ '–' पंक्तिद्वयं नास्ति । २. ख. कोलः । ३. ख. दधानां वरवर्णम् ।
४. ख. तूर्णम् ।

*टिप्पणी–१. अन्यग्रन्थेषु प्राप्तशेषभेदाः पञ्चमपरिशिष्टेऽवलोकनीयाः ।

एतस्या एवान्यत्र श्रुतिः नवयतिसहितं मगण - तगण - यगण-सगण-गुरुयुतं **मत्तमयूर**मिति गणान्तरेण नामान्तरमुक्तम् । तथा च **छन्दोमञ्जर्याम्** [द्वितीयस्तबके का. ९७] 'वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम् ।' इति लक्षणात् ।

**यथा–**

वन्दे गोपं गोपवधूभिः कृतरासं,
हस्ते वंशं रावि दधानं वरहासम् ।
नव्ये कुञ्जे संविदधानं नवकेलिं,
लोलाक्षं राधामुखपद्माकरहेलिम् ।। २५८ ।।

**इति माया १२२.**

**यथा वा,**

अस्मद्वृद्धप्रपितामहश्रीरामचन्द्रभट्टविरचित **कृष्णकुतूहले महाकाव्ये** रासवर्णनप्रस्तावे—

रासक्रीडासक्तवचस्कायमनस्काः,
संस्कारातिप्रापितनाट्यादिविशेषाः ।
वृन्दारण्यं तालतलोद्घट्टनवाचा-
मत्यासंगाच्चक्रुरिमा मत्तमयूरम् ।। २५९ ।।

यथा वा, **छन्दोमञ्जर्याम्** [द्वितीयस्तबके का० ९७]

लीलानृत्यन्मत्तमयूरध्वनिकान्तं,
चञ्चन्नीपामोदिपयोदानिलरम्यम् ।
कामक्रीडाहृष्टमना गोपवधूभिः,
कंसध्वंसी निर्जनवृन्दावनमाप ।। २६० ।।

'गौरीमम्बामम्बुरुहाक्षीमहमीडे,*[१] तं संसारध्वान्तविनाशं हरिमीडे*[२]'

---

***टिप्पणी—१** 'लीलारब्धस्थापितलुप्ताखिललोकां
लोकातीतैर्योगिभिरन्तश्चिरमृग्याम् ।
बालादित्यश्रेणिसमानद्युतिपुञ्जां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ।। १ ।।
[शङ्कराचार्यकृतगौरीदशकस्तोत्र प० १]

***टिप्पणी—२** स्तोष्ये भक्त्या विष्णुमनादिं जगदादिं
यस्मिन्नेतत् संसृतिचक्रं भ्रमतीत्थम् ।
यस्मिन् दृष्टे नश्यति तत्संसृतिचक्रं,
तं संसारध्वान्तविनाशं हरिमीडे ।। १ ।।
[शङ्कराचार्यकृतहरिमीडे स्तोत्र प०-१.]

इति च श्रीशङ्कराचार्यविरचिते गौरीदशके हरिस्तोत्रे च। 'हा तातेति-क्रन्दितमाकर्ण्यविषण्ण' *[1] इत्यादि रघुवंशे च सहस्रशो निदर्शनानि।

इति मत्तमयूरम् १२२.

१२३. अथ तारकम्

जलराशिविराजितहस्तसयुक्तं,
चरणस्य तथा विरतौ गुरुवृत्तम्[1]।
हृदये कुरुताखिलमोहितचित्तं,
फणिनायकभाषित-तारकवृत्तम् ॥ २६१ ॥

यथा–

विमलं कमलं गरलं मनुते सा,
सरसेन विसेन सुसेवितवेषा।
अवनं गमनं तदनन्दितचित्तं,
हृदये सदये तदये कुरु वित्तम् ॥ २६२ ॥

अथा वा, भूषणे*[2]–

अतिभारतरं हृदि चन्दनपङ्कं,
मनुते सरसीपवनं विषशङ्कम्।
तव दुस्तरतारवियोगपयोधि-
र्न हि पारमसौ भविता परमाधेः ॥ २६३ ॥

इति तारकम् १२३.

१२४. अथ कन्दम्

शरं हारयुग्मं क्रमादत्र संधेहि,
त्रयः पंक्तिसंख्याकवर्णं तथा धेहि।
इदं कन्दसंज्ञं समुक्तं फणीन्द्रेण,
कवीनां यथा मोदकन्दं कवीन्द्रेण ॥ २६४ ॥

---

१. ख. वित्तम्।

*टिप्पणी—१

हा तातेति क्रन्दितमाकर्ण्य विषण्ण-
स्तस्यान्विष्यन् वेतसगूढं प्रभवं सः।
शल्यप्रोतं वीक्ष्य सकुम्भं मुनिपुत्रं,
तापादन्तः शल्य इवासीत् क्षितिपोपि ॥

[रघुवंश स० ९, प० ७५]

*टिप्पणी —२. वाणीभूषणम् द्वि० अ० पद्य २४८

यथा–

विलोलद्द्विरेफावलीनां विरावेण,
हिमांशोः कराणां च सङ्गेन दावेण ।
वपुर्मे सदा दाहितं शीतयस्वालि,
पुरो दर्शयित्वा वपुर्मालतीमालि ॥ २६५ ॥

इति कन्दम् १२४.

### १२५. अथ पङ्कावलिः

भं कुरु तदनु नकारमिहानय,
धेहि जमथ जगणं परिभावय ।
शंखमिह तदनु भामिनि मानय,
पङ्कसुपरिकलितावलिमानय ॥ २६६ ॥

यथा–

कोमलसुललितमालति[1]मालिनि,
पङ्कजपरिमलसंलुलितालिनि ।
कोकिलकलकल[2]कूजितशालिनि,
राजति हरिरिह वञ्जुलजालिनि ॥ २६७ ॥

इति पङ्कावलिः १२५.

### १२६. अथ प्रहर्षिणी

कर्णाभ्यां सुललितकुण्डलं दधाना,
शंखाभ्यामतिसुरसा कुचाढ्यहारा ।
विश्रामं ननु रवनूपुरस्य युग्मे,
बिभ्राणा सखि ! जयति प्रहर्षिणीयम् ॥ २६८ ॥

यथा–

यद्दन्ते विलसति भूमिमण्डलं त-
न्मालिन्यश्रियमुपयातमुज्ज्वलाभे ।
देवेन्द्रैरभिकलितः स्तवप्रयोगै-
रस्माकं वितरतु शं स कोलदेहः ॥ २६९ ॥

यथा वा,

अस्मद्वृद्धप्रपितामह-महाकविपण्डितश्रीरामचन्द्रभट्टविरचिते कृष्णकुतूहले महाकाव्ये श्रीभगवदाविर्भाववर्णनप्रस्तावे––

---

१. ख. कुन्दसुमालिनि । २. ख. कोकिलनवकल ।

सत्यं सद्वसु वसुदेवदेवकीभ्यां,
रोहिण्यामुडुनि नभस्य कृष्णपक्षे ।
पर्जन्ये कटति निशीथनीरवाया-
मष्टम्यां निगमरहस्यमाविरासीत् ।। २७० ।।

इति प्रहर्षिणी १२६.

### १२७. अथ रुचिरा

पयोधरे कुसुमितहारभूषिता,
सुपुष्पिणी सरसविराविनूपुरा ।
रसान्विता सकनकरावकङ्कणा,
चतुर्यतिः सखि ! रुचिरा विराजते ।। २७१ ।।

यथा–

कलापिनं निजदयिताविहारिणं
पयोधरं सखि ! कलये विराविणम् ।
हरिं विना मम सकलं विषायितं,
हरेः पुनः सकलमिदं सुखायितम् ।। २७२ ।।

इति रुचिरा १२७.

### १२८. अथ चण्डी

कलय नयुगमिह धारय हस्तं,
तदनु च विरचय सं किल शस्तम् ।
चरणविरतियुतभासुरहारा,
त्रिजगति वरसखि राजति चण्डी ।। २७३ ।।

यथा–

सरुतचरणयुतनूपुरशोभा,
बहुविधविरचितमानसलोभा ।
हरिगतवनमनुगच्छति राधा
सखि मनसिजकृतमानसबाधा ।। २७४ ।।

इति चण्डी १२८.

१२९. अथ मञ्जुभाषिणी

करसङ्गिपुष्पयुतकङ्कणान्विता,
　　रसरूपरावमितनूपुराञ्चिता ।
कुचशोभमानवरहारधारिणी,
　　कुरुते मुदं मनसि मञ्जुभाषिणी ॥ २७५ ॥

यथा–

जनितेन मित्रविरहेण दुःखिता,
　　मिलितुं तथैव वनिता हरेर्हरित् ।
विधुबिम्बचित्तभवयन्त्रपूजनं,
　　कुसुमैस्तनोति नवतारकामयैः ॥ २७६ ॥

इति मञ्जुभाषिणी १२९.

सुनन्दिनी इत्यन्यत्र । अन्यत्रेति शम्भौ । क्वचिदियमेव प्रबोधिता च[1]* ।

१३०. अथ चन्द्रिका

कुरु नगणयुगं धेहि पादे ततः,
　　तगणयुगलकं गोऽपि चान्ते ततः ।
चरणमनु तथा कामवर्णान्विता ,
　　हयरसविरतिश्चन्द्रिका पूजिता ॥ २७७ ॥

यथा[1]–

कलयत हृदये शैलसंधारकं,
　　मुनिजनमहितं देवकीदारकम् ।
व्रजजनवनिता-दुःखसन्तारकं,
　　जलधररुचिरं दैत्यसंहारकम् ॥ २७८ ॥

इति चन्द्रिका १३०.

यथा वा–

'इह दुरधिगमैः किञ्चिदेवागमैः ।' इत्यादि किरातार्जुनीये*[2] । क्वचिदियमेव उत्पलिनी इति प्रसिद्धा ।

---

१. ख. यथा उदाहरण नास्ति ।

*टिप्पणी—१ छन्दोमञ्जरी, द्वितीयस्तबक, कारिका ९९ एवं १०२ ।

*टिप्पणी—२　'इह दुरधिगमैः किञ्चिदेवागमैः
　　सततमसुतरं वर्णयत्यन्तरम् ॥
　　अमुमतिविपिनं वेददिग्व्यापिनं
　　पुरुषमिव परं पद्मयोनिः परम् ॥
　　[किरातार्जुनीयम् स० ५, प० १८]

१३१ अथ कलहंसः

सगणं विधेहि जगणं च सुयुक्तं,
सगणद्वयं कुरु पुनः फणिवित्तम् ।
गुरुमन्तगं कुरु तथा हृतचित्तं,
कलहंसनामकमिदं वरवृत्तम् ॥ २७६ ॥

यथा–

नवनीतचोरममलद्युतिशोभं,
व्रजसुन्दरीवदनपङ्कजलोभम् ।
ललितादिगोपवनिताकृतरासं,
कलये हरिं निजहृदा वरहासम् ॥ २८० ॥

इति कलहंसः १३१.

कुत्रचिदयमेव सिंहनाद इति, क्वचिच्च कुटजाख्यमिति ।

१३२. अथ मृगेन्द्रमुखम्

कुरु नगणं तदनन्तरं नरेन्द्रं,
तदनु च जं कुरु पक्षिणामथेन्द्रम् ।
तदनु विधारय नूपुरं पदान्ते
रचय मृगेन्द्रमुखं सुखेन कान्ते ! ॥ २८१ ॥

यथा–

कुमुदवनीषु सखे ! विधूतबन्धः,
कमलवनस्य सदा हृतातिगन्धः ।
विधुरुदितो धवलीकृतातिलोकः,
प्रतिरजनीषु च दत्तकोकशोकः ॥ २८२ ॥

इति मृगेन्द्रमुखम् १३२.

१३३. अथ क्षमा

द्विजवर-सगणौ धेहि वैनतेयं,
यगणमथ तथा पण्डितालिगेयम् ।
मुनिरचितयतिः सज्जनादिमेयं,
फणिपतिकथिता राजति क्षमेयम् ॥ २८३ ॥

यथा–

कलयत हृदये नन्दगोपसूनुं,
फणिपतिदमनं न्यक्कृतातिभानुम् ।

शशधरवदनं राधिकारसालं,
सरसिजनयनं पङ्कजालिमालम् ।। २८४ ।।

इति क्षमा १३३.

इयमेव क्वचिद् गणान्तरेणापि क्षमैव[1]* भवति ।

### १३४. अथ लता

कलय नगणं विधेहि ततः करं,
जगणयुगलं च देहि ततः परम् ।
चरणविरतौ गुरुं कुरु सम्मता,
रसकृतयतिर्मुदा विहिता लता ।। २८५ ।।

यथा–

कलय हृदये मुदा व्रजनायकं,
ललितमुकुटं सदा सुखदायकम् ।
युवतिसहितं व्रजेन्द्रसुतं हरिं,
कनकवसनं भवाम्बुनिधेस्तरिम् ।। २८६ ।।

इति लता १३४.

### १३५. अथ चन्द्रलेखम्

कुरु न-सगणौ पक्षिराजं च युक्तं,
रचय रगणं कामवर्णैरमुक्तम् ।
तदनु च पुनः कुण्डलं धेहि शेषं,
कलय फणिना भाषितं चन्द्रलेखम् ।।२८७।।

यथा–

नमत सततं नन्दगोपस्य सूनुं,
फणिप-दमनं दानवोलूकभानुम् ।
कमलवदनं राधिकाया रसालं,
तरलनयनं पङ्कजालीसुमालम् ।। २८८ ।।

इति चन्द्रलेखम् १३५.

चन्द्रलेखा[2]* इत्यन्यत्र ।

---

*टिप्पणी—१ वृत्तरत्नाकरस्य (अ० ३ का० ७५) नारायणीटीकायां 'इयं क्षमैव आचार्यो मतभेदेन संज्ञान्तरार्थं पुनरूचे' ।

*टिप्पणी—२ छन्दोमञ्जरी, द्वितीयस्तबक, कारिका १०५

### १३६. अथ सुद्युतिः

कुरु न-सगणौ पादे तकारौ तथा,
कलय वलयं स्युः कामवर्णा यथा ।
रसपरिमितैर्वर्णैस्तथा स्याद् यतिः,
फणिपकथिता संशोभते सुद्युतिः ।। २८९ ।।

यथा–

वदनवलितैर्भृङ्गैर्युता सद्वया,
लुलितललिता लोलालसाक्षिद्वया ।
सखि हरिगृहाद् याति प्रगे राधिका,
सकलसुदृशां नित्यं मनोबाधिका ।। २९० ।।

इति सुद्युतिः १३६.

### १३७. अथ लक्ष्मीः

कर्णे विराजिसरसकुण्डलान्विता,
गन्धाढ्यपुष्पयुतकरेण शोभिता ।
वक्षोरुहे च विमलहारशोभिनी,
लक्ष्मीः सदा फलतु ममातुलं फलम् ।। २९१ ।।

यथा–

वन्दे हरिं फणिपतिभोगशायिनं,
सर्वेश्वरं सकलजनेष्टदायिनम् ।
पीताम्बरं मणिमुकुटादिभासुरं,
गो-गोपिकानिकरवृतं हतासुरम् ।। २९२ ।।

इति लक्ष्मीः १३७.

### १३८. अथ विमलगतिः

जलधिमित नगणमिह कलय,
तदनु च सखि लघुमिह रचय ।
फणिपतिसुकलितमिति भवति,
विदनु यति विमलगति सुदति ! ।। २९३ ।।

यथा–

अभिनवसजलजलदविमल,
　　निजजनविहतसकलशमल[1]।
कमलसुललितनयनयुगल,
　　जय ! जय ! सुरनुतपदकमल ॥ २९४ ॥

इति विमलगतिः १३८.

[2]अत्रापि प्रस्तारगत्या त्रयोदशाक्षरस्य द्विनवत्युत्तरं शतमष्टौ सहस्राणि च ८१९२ भेदा भवन्ति, तेषु कतिचन भेदाः समुदाहृताः, शेषभेदाः सुधीभिः प्रस्तार्य समुदाहरणीया इत्यलं पल्लवेन ।*

इति त्रयोदशाक्षरम् ।

## अथ चतुर्दशाक्षरम्

तत्र–

१३९. सिंहास्यः

यस्मिन्निन्द्रैः संख्याता राजन्ते युक्ता वर्णाः,
　　पादे सूर्याश्वैः संख्याकाः संशोभन्ते कर्णाः ।
नागानामीशेनैतत् प्रोक्तं सिंहास्यं कान्ते !
　　भूपालानां चित्तानन्दस्थानं धेहि स्वान्ते ॥ २९५ ॥

यथा–

यो दैत्यानामिन्द्रं वक्षस्पीठे हस्तस्याग्रै-
　　र्भिद्यद् ब्रह्माण्डं व्याक्रुश्योच्चैर्व्यामृद्नादुग्रैः ।
दत्तालीकान्युन्मिश्रं निर्यद्विद्युद्वृद्धास्य-
　　स्तूर्णं सोऽस्माकं रक्षां कुर्याद्घोर(वीरः)सिंहास्यः ॥ २९६ ॥

इति सिंहास्यः १३९.

१४०. अथ वसन्ततिलका

हारद्वयं स्फुरदुरोजयुतं दधाना,
　　हस्तं च गन्धकुसुमोज्ज्वलकङ्कणाढ्यम् ।
पादे तथा सरुतनूपुरयुग्मयुक्ता,
　　चित्ते वसन्ततिलका किल चाकसीति ॥ २९७ ॥

---

१. ख. समल । २. पंक्तित्रयं नास्ति क. प्रतौ ।

* टिप्पणी– ग्रन्थान्तरेषु समुपलब्धशेषभेदाः पञ्चमपरिशिष्टे पर्यवेक्षणीयाः ।

यथा–

लोके त्वदीययशसा धवलीकृतेऽस्मिन्,
छायाभयं निजशरीरकृतं विमुच्य[1] ।
ज्योत्स्नावतीषु रजनीष्वभिसारिकाणां,
सङ्घः प्रियस्य सदनं सुखतः प्रयाति ॥ २६८ ॥

यथा वा, कृष्णकुतूहले–

पातुं न पारयति यत्कथितं पयस्त-
द्दध्नो विनाश्य दृढनाशयति स्वकीयान्[2] ।
खण्डं निधाय दधिखण्डमखण्डमेव,
क्षिप्त्वा मुखे निखिलमत्ति मुखे सुतस्ते ॥ २६६ ॥

इति वसन्ततिलका १४०.

### १४१. अथ चक्रम्

कुण्डलकलितदहनमित नगणं,
शङ्खसहितमिह विरचय सगणम् ।
कुण्डल[3]नरपतिवरकविकलितं,
क्रमखिलकविजनहृदि ललितम् ॥ ३०० ॥

यथा–

कोकिलकलरवसुललितसमये,
शीतलमलयजपवनसुखमये ।
कामविशिखचयविदलितहृदये,
सुन्दरि ! परिहर हृदयमदमये ॥ ३०१ ॥

यथा वा, वाणीभूषणे– [द्वितीयाध्याय, पद्य २५८]

सुन्दरि ! नभसि जलदचयरुचिरे,
देहि नयनयुगमतिघनचिकुरे ।
मानमिह न कुरु जलधरसमये,
किं तव भवति हृदयमिदमदये ॥ ३०२ ॥

इति चक्रम् १४१.

### १४२. अथ असम्बाधा

बिभ्राणा कर्णौ कलितललितताटङ्कौ(ङ्का),
बाणैः सञ्छिन्ना द्विजविरचितशोभाढ्या ।

---

[1] क. विमुक्तः । [2] ख. दृढमाशयति स्वकीयान् । [3] ख. कुण्डली ।

हस्ताग्रे राजद्विरचितवलयद्वन्द्वा,
स्तुत्या संप्रोक्ता वरकविभिरसम्बाधा ॥ ३०३ ॥

यथा -

वन्दे गोपालं व्रजजनतरुणीधीरं,
रासक्रीडायामभिगतयमुनातीरम् ।
देवानां वन्द्यं हृतवरवनिताचीरं,
बालैः संयुक्तं दितिसुतदलने वीरम् ॥ ३०४ ॥

इति असम्बाधा १४२.

१४३. अथ अपराजिता

द्विजपरिकलिता करेण विराजिता,
कुचयुगकलिता प्रलम्बितहारिणी ।
भुवननिगदितातिशोभितवर्णिनो,
कृतमुनिविरतिर्जयत्यपराजिता ॥ ३०५ ॥

यथा–

अतिरुचिदशनैः सभातमसां हरः,
दितिसुतरुधिरैः सुरक्तनखाङ्कुरः ।
जलभृदुडुगणौ सटाभिरुपाहरत्[१],
जयति हरितनुर्भटानपि संहरत्[२] ॥ ३०६ ॥

इति अपराजिता १४३.

१४४. अथ प्रहरणकलिका

रचयत नगणद्वयमथ भगणं,
लघुगुरुसहितं कलयत नगणम् ।
प्रहरणकलिका मुनियतिसहिता,
फणिपतिकथिता कविजनमहिता ॥ ३०७ ॥

यथा –

नम मधुमथनं जलनिधिशयनं,
सुरगणनमितं सरसिजनयनम् ।
इति गदनमतिर्भवति हृदि यदा,
भवजलनिधि[त]स्तरति सखि ! तदा ॥ ३०८ ॥

---

१. ख. उपाहरन् । २. ख. संहरन् ।

यथा वा, कृष्णकुतूहले—

व्रजयुवतिभिरित्यभिमतवचसि,
प्रतिपदममृतद्रवमिव विकिरति ।
मनसिजविशिखप्रपतनविधुत-
स्वविरहदहनप्रशमनमकलि[1] ॥ ३०९ ॥

इति प्रहरणकलिका १४४.

१४५. अथ वासन्ती

कर्णौ कृत्वा कुण्डलसहितौ गन्धं पुष्पं,
हस्ते धृत्वा कङ्कणमथ हारं राजन्तम् ।
स्वर्णेनाढ्यं नूपुरमथ धृत्वा राजन्ती,
नागप्रोक्ता राजति कविचित्ते वासन्ती ॥ ३१० ॥

यथा—

वन्दे गोपीमन्मथजनकं कंसारातिं,
भूमेः कार्यार्थं नृषु कृतमिथ्याविख्यातिम् ।
रासे वंशीवादननिपुणं कुञ्जे कुञ्जे,
लीलालोलं गोकुलनवनारीणां पुञ्जे ॥ ३११ ॥

इति वासन्ती १४५.

१४६. अथ लोला

कर्णे कुण्डलयुक्ता हस्तं स्वर्णसनाथं,
बिभ्राणा वलयाढ्यं हारौ चोज्ज्वलपुष्पौ ।
सध्वानं च दधाना दिव्यं नूपुरयुग्मं,
नागोक्ता कविचित्ते कान्ता राजति लोला ॥ ३१२ ॥

यथा—

गोपालं कलयेऽहं नित्यं नन्दकिशोरं,
वृन्दारण्यनिवासं गोपीमानसचौरम्[2] ।
वंशीवादनसक्तं नव्ये कुञ्जकुटीरे,
नारीभिः कृतरासं कालिन्दीवरतीरे ॥ ३१३ ॥

इति लोला १४६.

---

१. क. कमलि । २. ख. चोरं ।

### १४७. अथ नान्दीमुखी

द्विजपरिकलिता हस्तयुक् कङ्कणाढ्या,
　　विरुतविलसितौ नूपुरौ धारयन्ती ।
रसकनकयुतं हारमुच्चैर्दधाना,
　　स्वरविरतियुता भाति नान्दीमुखीयम् ॥ ३१४ ॥

यथा–

नखगलदसृजां पानतो भीषणास्यः
　　सुरनृपतिमुखैर्देवसंघैरुपास्यः ।
भयजनकरवैर्नादयद्दिङ्मुखानि,
　　प्रकटयतु स वः सिंहवक्त्रः सुखानि ॥ ३१५ ॥

इति नान्दीमुखी १४७,

### १४८. अथ वैदर्भी

कर्णे कृत्वा कनकसुललितं ताटङ्कं,
　　संबिभ्राणा द्विजमथ वलयं हस्ताग्रे ।
दिव्यं हारद्वितयमथ दधाना युक्तं
　　वेदैश्छिन्ना जगति विजयते वैदर्भी ॥ ३१६ ॥

यथा–

वन्दे नित्यं नरमृगपतिदेहं व्यग्रं,
　　दैत्येशोरःस्थलदलनविधावत्युग्रम् ।
प्रह्लादस्याभिलषितवरदं सृक्काग्रे,
　　संलिह्यन्तं रुधिरविलुलितं जिह्वाग्रम् ॥ ३१७ ॥

इति वैदर्भी १४८.

### १४९. अथ इन्दुवदनम्

धेहि भगणं तदनु धारय जकारं,
　　हस्तमथ कारय ततोऽपि च नकारम् ।
हारयुगलं तदनु देहि चरणान्ते,
　　नागकृतमिन्दुवदनं भवति कान्ते ! ॥ ३१८ ॥

यथा–

नौमि वनितावितत्तरासरसयुक्तं,
　　गोकुलवधूजनमनोहरणसक्तम् ।

देवपतिगर्वहरखण्डनसुदक्षं,
भूमिवलये निहतदैत्यगणलक्षम् ॥ ३१९ ॥

इति इन्दुवदनम् १४९.

स्त्रीलिङ्गमन्यत्र* ।

१५०. अथ शरभी

कर्णं स्वर्णोज्ज्वलललितताटङ्कयुक्तं,
संबिभ्राणा द्विजमथ रुतं नूपुराढ्यम् ।
हारं पुष्पं वलययुगलं धारयन्ती,
वेदैश्छिन्ना जयति शरभी पिङ्गलोक्ता ॥ ३२० ॥

यथा–

वन्दे कृष्णं नवजलधरश्यामलाङ्गं,
वृन्दारण्ये व्रजयुवतिभिर्जातसङ्गम् ।
कालिन्दीये सरसपुलिने क्रीडमानं[१],
कालीयाहेः प्रथितयशसो धूतमानम् ॥ ३२१ ॥

इति शरभी १५०.

१५१. अथ अहिधृतिः

रचय नयुगलं कुरु ततो भगणं,
लघुगुरुसहितं कुरु तथा जगणम् ।
मुनिविरतियुता फणिनृपस्य कृतिः,
जगति विजयते सुविमलाऽहिधृतिः ॥ ३२२ ॥[२]

यथा–

सकलतनुभृतां जलमपेयतरं,
विगतवि[ष]भयं रचयितुं कृपया ।
पतति तरुवराच्छिरसि नन्दसुते,
भुवनभरसहा विजयतेऽहिधृतिः ॥ ३२३ ॥*

इति अहिधृतिः १५१.

१५२. अथ विमला

रचय न-भूपती कुरु तथा भगणं,
लघुवलयाचितं च विरतौ जगणम् ।

---

१. ख. सवमानं । २. पूर्णं पद्यं नास्ति क. प्रतौ ।

*टिप्पणी—१ वृत्तरत्नाकरः अ० ३, का० ८२

फणिपतिभाषिता रविहयैर्विरति-
वेरकविमानसेऽतिविमला जयति ॥ ३२४ ॥

यथा–

व्रजजननागरीदधिहृतावतुला,
तरणिसुतातटे हरितनुर्विमला[1] ।
वरवनितादृशां सुसुकृतैककला,
मम विमले सदा भवतु हृद्यचला ॥ ३२५ ॥

इति विमला १५२.

१५३. अथ मल्लिका

कुरु गन्धयुग्मसहितं मृगाधिपतिं,
रचयाशु सन्ततमथो नरावपि सम् ।
इह मल्लिकां कलयतां विलासवतीं,
नवपञ्चकैर्यतियुतां मुदो[2] जननीम् ॥ ३२६ ॥

यथा–

सखि ! नन्दसूनुरिह मे मनोहरणः,
जनताप्रसादसुमुखस्तमोहरणः ।
भविता सहायकरणो जनानुगतः,
करवै कमत्र शरणं वने सुखतः ॥ ३२७ ॥

इति मल्लिका १५३.

१५४. अथ मणिगणम्

जलधिमित नगणमिह कलयत,
तदनु च लघुयुगमपि रचयत ।
सकलफणिनृपतिविरचितमिति,
निजहृदि कलयत मणिगणमिति ॥ ३२८ ॥

यथा–

भुजयुगलविलसितफणिवलय,
कृतसकलदितिसुतकुलविलय ।
प्रलयसमयभयजनक सलय[3],
वृषगमनमपि सुखमनुकलय ॥ ३२९ ॥

इति मणिगणम् १५४.

---

१. पद्यस्य पूर्वार्धभागं [illegible] ख. प्रतौ । २. क. मुदा । ३. ख. जनसकलय ।

'अत्रापि प्रस्तारगत्या चतुर्दशाक्षरस्य चतुरशीत्यधिकानि त्रिशतानि षोडश-सहस्राणि च भेदास्तेषु कियन्तो भेदाः प्रदर्शिताः, शेषभेदाः सुधीभिराकरतः स्वमत्या वा प्रस्तार्य समूहनीया इति दिक्'[1]* ।

*इति चतुर्दशाक्षरम् ।*

## अथ पञ्चदशाक्षरम्

तत्र प्रथमम्–

### १५५. लीलाखेलः

यस्मिन् वृत्ते रव्यश्वैः संख्याता दृश्यन्ते कर्णाः,
पादे पादे तिथ्या सम्प्रोक्ताः संशोभन्ते वर्णाः ।
हारश्चैकोऽन्ते यस्मिन्नागानामीशेन प्रोक्तं,
लोके वृत्तानां सारं लीलाखेलाख्यं तद्वृत्तम् ।। ३३० ।।

यथा

देवैर्वन्द्यं त्रैलोक्यास्थानं देहं खर्वीकुर्वन्,
दैत्यानामीशं भूम्यां ख्यातः[2] पातालस्थं कुर्वन् ।
स्वाराज्यं देवेशा यान्त्यन्तं स्थैर्याढ्यं संयच्छन्,
मामव्याद् गोविन्दो वैरोच्यानाशीः[3]पद्यं गर्जन् ।। ३३१ ।।

इति लीलाखेलः १५५.

यथा वा –

'मा कान्ते पक्षस्यान्ते पर्याकाशे देशेस्वाप्सीः', इति ज्यौतिषिकाणां कालपरिमाणपरं उदाहरणमिति **कण्ठाभरणे***[2] । लीलाखेलस्य एतस्यैवान्यत्र **सारङ्गिका**[3]* इति नामान्तरमुक्तम् ।

### १५६. अथ मालिनी

द्विजकरवलयाढ्या नूपुरारावयुक्ता,
श्रवणरचितपुष्पप्रोततاटङ्कयुग्मा ।
वसुरचितविरामा सर्वलोकैकवर्णा,
फणिपनृपतिकान्ता भासते मालिनीयम् ।। ३३२ ।।

---

१. पंक्तित्रयं नास्ति क. प्रतौ । २. ख. घातः । ३. ख. वैरोचन्याशीः

*टिप्पणी—१ ग्रन्थान्तरेषु प्राप्तशेषभेदाः पञ्चमपरिशिष्टे पर्यालोच्याः ।

*टिप्पणी–२ मा कान्ते ! पक्षस्यान्ते पर्याकाशे देशे स्वाप्सीः,
कान्तं वक्त्रं वृत्तं पूर्णं चन्द्रं मत्वा रात्रौ चेत् ।
क्षुत्क्षामः प्राटंश्चेतश्चेतो राहुः क्रूरः प्राद्यात्,
तस्माद्ध्वान्ते हर्म्यस्यान्ते शय्यैकान्ते कर्त्तव्या ।।
[ कण्ठाभरण ]

*टिप्पणी–३ प्राकृतपैंगलम्-द्वितीयपरिच्छेद, पद्य १५६ ।

यथा–

अयममृतमरीचिर्दिग्वधूकर्णपूरं
सपदि परिविधातुं कोऽपि कामीव कान्तः ।
सरस इव नभस्तोऽत्यन्तविस्तारयुक्ता-
दुडुगणकुमुदानि प्रोच्चकैरुच्चिनोति ॥ ३३३ ॥

यथा वा, पाण्डवचरिते—

भवनमिव ततस्ते बाणजालैरकुर्वन्,
गजरथहयपृष्ठे बाहुयुद्धे च दक्षाः ।
विधृतनिशितखड्गाश्चर्मणा भासमाना,
विदधुरथ समाजे मण्डलात् सव्यवामात् ॥ ३३४ ॥

यथा वा, अस्मत्पितामहमहाकविपण्डितश्रीरायभट्टकृते शृङ्गारकल्लोले खण्डकाव्ये—

मन इव रमणीनां रागिणी वारुणीयं,
हृदयमिव युवानस्तस्कराः स्वं हरन्ति ।
भवनमिव मदीयं नाथ शून्यो हि देश-
स्तव न गमनमीहे पान्थ कामाभिरामा ॥ ३३५ ॥

यथा वा, कृष्णकुतूहले—

निरवधिदिनमाना यं विना गोपवध्व-
स्तमभिकमभिसायं वीक्षमाणा ननन्दुः ।
स्मितमधुरमपाङ्गालोकनं प्रीतिवल्याः,
कुसुममिव तदीयं वीक्ष्य कृष्णोप्यतुष्यत् ॥ ३३६ ॥

इति मालिनी १५६.

## १५७. अथ चामरम्

पक्षिराजभूपतिक्रमेण यद् विराजते,
बाणभूमिसंख्ययाक्षरं च यत्र भासते ।
नागराजभाषितं तदेव चारुचामरं,
मानसे विधेहि पाठतोऽपि मोहितामरम् ॥ ३३७ ॥

यथा–

नौमि गोपकामिनीमनोविनोदकारणं,
लीलयावधूतकंसराजमत्तवारणम् ।
कालियाहिमस्तकोल्लसन्मणिप्रकाशितं,
नन्दनन्दनं सदैव योगिचित्तभासितम् ॥ ३३८ ॥

यथा वा, भूषणे[1] *—

रासलास्यगोपकामिनीजनेन खेलता,
पुष्पपुञ्जमञ्जुकुञ्जमध्यगेन दोलता ।
तालनृत्यशालिगोपबालिकाविलासिना,
माधवेन जायते सुखाय मन्दहासिना ।। ३३९ ।।

इति चामरम् १५७.

एतस्यैव अन्यत्र तूणकं *[2] इति नामान्तरम् ।

१५८. अथ भ्रमरावलिका

चरणे विनिधेहि सकारमिषूपमितं,
कुरु वर्णमपीषुनिशाकरसंप्रमितम् ।
फणिनायकपिङ्गलचित्तमुदः कलिका,
सखि ! भाति कवीन्द्रमुखे भ्रमरावलिका ।। ३४० ।।

यथा–

कलकोकिलकूजितपूजितनू (त्न) वनं,
वनजाक्षिनवीनसरोजवनीपवनम् ।
हिमदीधितिकान्तिपयःपरिधौतमिदं,
जगदाशु विलोक्य[1] परित्यज मानमिदम् ।। ३४१ ।।

यथा वा, भूषणे[3]–

सखि ! सम्प्रति कं प्रति मौनमिदं विहितं,
मदनेन धनुः सशरं स्वकरे निहितम् ।
नतिशालिनि का वनमालिनि मानकथा,
रतिनायकसायकदुःखमुपैषि[2] वृथा ।। ३४२ ।।

इति भ्रमरावलिका १५८.

भ्रमरावलीति पिङ्गले[4] *

---

१. ख. जगदाशुचि लोक्य । २. 'मुपैति' वाणीभूषणे ।

*टिप्पणी—१ वाणीभूषणम्, द्वितीयाध्याय, प० २६२
२ छन्दोमञ्जरी, द्वितीयस्तबक, कारिका १३७
३ वाणीभूषणम्, द्वितीयाध्याय, पद्य २६६
४ प्राकृतपैङ्गलम्, द्वितीयपरिच्छेद, प० १५४

१५६. अथ मनोहंसः

प्रथमं विधेहि करं जकारविराजितं,
जगणं ततो भगणेन कारय भूषितम् ।
विनिधेहि पक्षिपतिं ततस्तिथिजाक्षरं,
कुरु हंसमेणविलोचने मनसः परम् ॥ ३४३ ॥

यथा–

तनुजाग्निना सखि ! मानसं मम दह्यते,
तनुसन्धिरुष्णगदारुवत् परिभिद्यते ।
अधरं च शुष्यति वारिमुक्तसुशालिवत्,
कुरु मद्गृहं कृपया सदा वनमालिमत् ॥ ३४४ ॥

यथा वा–

नवमञ्जुवञ्जुलकुञ्जकूजितकोकिले,
मधुमत्तचञ्चलचञ्चरीककुलाकुले ।
समयेतिधीरसमीरकम्पितमानसे,
किमु चण्डि मानमनोरथे न विखिद्यसे ॥ ३४५ ॥

इति मनोहंसः १५६.

१६० अथ शरभम्

जलनिधिकृतमिह विरचय नगणं ,
चरणविरतिमनुविरचय सगणम् ।
वरफणिपतिविरचितमतिरुचिरं ,
शरभमखिलहृदि विलसति सुचिरम् ॥ ३४६ ॥

यथा–

नभसि समुदयति सखि ! हिमकिरणं ,
वहति सुलघुलघुमलयजपवनम् ।
त्यजति तिमिरमिदमपि(भि) जननयनं ,
द्रुतमनुविरचय मधुरिपुशयनम् ॥ ३४७ ॥

इति शरभम् १६०.

इदमेवान्यत्र शशिकला*'इति नामान्तरेण उक्तम् ।

अथ मणिगुणनिकरस्रजौ छन्दसी, किञ्च—

इदमेव हि यदि वसुयति ८ मणिगुणनिकराख्यमीर्यते हि तदा ।
यदि तु रसे ६ विश्रामः स्रगिति समाख्यां तदा लभते ॥ ३४८ ॥

---

*टिप्पणी—१ छन्दोमञ्जरी द्वितीयस्तबक कारिका १३।

अपि च

मणिगुणनिकरोदाहृतिरिह शरभोदाहृतौ ज्ञेया ।
स्रगुदाहरणं ज्ञेयम् लक्षणवाक्ये तु शरभस्य ।। ३४९ ।।

यथा वा–

नरकरिपुरवतु निखिलसुरगति-
रमितमहिमभरसहजनिवसतिः[1] ।
अनवधिमणिगुणनिकरपरिचितः,
सरिदधिपतिरिव धृततनुविभवः ।। ३५० ।।
अयि ! सहचरि ! रुचिरतरगुणमयो,
अदिमवसतिरनपगतपरिमला ।
स्रगिव निवसति लसदनुपमरसा,
सुमुखि ! मुदितदनुजदलनहृदये ।। ३५१ ।।

इति छन्दोमञ्जर्यामुदाहरणद्वयं*[1] यतिभेदेनोक्तम् । प्रकृतं तु शरभमेव इति न कश्चिद् विशेषः ।

### १६१. अथ निशिपालकम्

धेहि भगणं तदनु भूपतिमथो करं,
देहि नगणं च रगणं कुरु ततः परम् ।
नागनृपपिङ्गलसुभाषितमुदीरितं,
वृत्तममलं हृदि निधेहि निशिपालकम् ।। ३५२ ।।

यथा–

गोपतरुणीजनमनोहरणपण्डितं,
हस्तयुगधारितसुवेणुपरिमण्डितम् ।
चन्द्रकविराजितविलोलमुकुटं हृदा,
नौमि हरिमर्कतनयातटगतं सदा ।। ३५३ ।।

यथा वा, भूषणे*[2]–

चन्द्रमुखि ! जीवमुखि(षि) ! वाति मलयानिले,
याति मम चित्तमिव पाति[2] सदनानिले ।

---

१ क. सनिखिल सुगति । २. गाढ 'वाणीभूषणे' ।

*टिप्पणी—१ छन्दोमञ्जरी, द्वितीयस्तवक, कारिका १३३, १३२
२ वाणीभूषणम् द्वितीयाध्याय, पद्य २५६

तापकर-कामशर-शल्यवरकीलितं[1],

मामिह हि पश्य जहि कोपमतिशीलितम्[2] ॥ ३५४ ॥

इति निशिपालकम् १६१.

१६२. अथ विपिनतिलकम्

रचय नगणं तदनु धेहि हस्तं मुदा,

नगणसहितं रगणयुग्ममन्ते सदा ।

रसनवयतिं फणिपभाषितं सुन्दरं

विपिनतिलकं कलय बाणविध्वक्षरम् ॥ ३५५ ॥

यथा–

नरवरपतेरिव नराः शशाङ्कांशवः,

तिमिरनिकरः सपदि चोरवद् गच्छति ।

अयमपि रविः सखि ! हृताधिकारिप्रभः,

कथयति विधोः खगकुलं जयं बंदिवत् ॥ ३५६ ॥

यथा वा–

जयति करुणानिधिरशेषसत्तारकः,

कलितललितादिवनितामनोहारकः ।

सकलधरणीपकुलमण्डलीपालकः,

परमपदवीकरणदेवकीबालकः ॥ ३५७ ॥

इति विपिनतिलकम् १६२.

१६३. अथ चन्द्रलेखा

कर्णे ताटङ्कयुग्मं पुष्पाढ्यहारो दधाना,

बिभ्राणा नूपुरस्य द्वन्द्वं सुरावं सुचित्तम् ।

पादान्ते धारयन्ती वीणां सुवर्णावियुक्तां,

नागोक्ता चन्द्रलेखा सप्ताष्टछेदैरमुक्ता ॥ ३५८ ॥

यथा–

नित्यं वन्दे महेशं गौरीशरीरार्द्धयुक्तं,

दग्धाऽनङ्गं पुरारिं वेतालसङ्घैरमुक्तम् ।

बिभ्राणं चन्द्रलेखां नृत्येषु कृत्तिं धुनानं,

गङ्गासञ्जातसङ्गं दृष्ट्या त्रिलोकीं पुनानम् ॥ ३५९ ॥

इति चन्द्रलेखा १६४.

चण्डलेखा इत्यन्यत्र ।

---



१. तल्पभरशीलितम्, 'वाणीभूषणे' । २. शेषमतिसञ्चितम् 'वाणीभूषणे' ।

### १६४. अथ चित्रा

कर्णद्वन्द्वं ताटङ्काभ्यां योजितं कारयित्वा,
हारौ बिभ्राणा स्वर्णाढ्यं पुष्पयुक्तं तथैव ।
तिथ्युक्तैर्वर्णैः संयुक्ता कङ्कणौ धारयन्ती,
शोभां धत्ते चित्रां चित्रा शब्दवन्नूपुराभ्याम् ।। ३६० ।।

यथा–

कालिन्दीकूले केलीलोलं वधू[1]सङ्घयुक्तं,
वन्दे गोपालं रक्षायां नन्दगोपस्य सक्तम् ।
हस्तद्वन्द्वे धृत्वा श्वासैर्वंशिकां पूरयन्तं,
दैतेयान् हत्वा देवानां संकटं दूरयन्तम् ।। ३६१ ।।

इति चित्रा १६४.

चित्रमिदमन्यत्र[1]* ।

### १६५. अथ केसरम्

कुरु नगणं ततोऽपि च विधेहि भूपतिं,
भगणपयोधरौ तदनु पक्षिणां पतिम् ।
फणिपतिभाषितं तिथिविभाविताक्षरं,
सुकविमनोहरं हृदि निधेहि केसरम् ।। ३६२ ।।

यथा–

चिरमिह मानसे कलय नन्ददारकं,
वरवनमालिनं दितिसुतापहारकम् ।
व्रजवनितारसोदधिनिमग्नमानसं,
रवितनयातटे कलितपीतवाससम् ।। ३६३ ।।

इति केसरम् १६५.

### १६६. अथ एला

प्रथमं करं रचय जगणमनु कान्ते !
नगणद्वयं तदनु कुरु यगणमन्ते ।
फणिभाषिता शरपरिकलितविरामा,
कृतसंस्तुतिः सकलवरकविभिरेला ।। ३६४ ।।

---

१. ख. बन्धू ।

*टिप्पणी—१ छन्दोमञ्जरी, द्वितीयस्तबक, कारिका १३६.

यथा–

हृदि भावये विमलकमलनयनान्तं ,
जनपावनं नवजलधररुचिकान्तम् ।
व्रजनायिकाहृदयमधिजनितकामं ,
वनमालिनं सकलसुरकुलललामम् ॥ ३६५ ॥

इति एला १६६.

१६७. अथ प्रिया

कुरु नगणयुगं धेहि तं भगणं ततः ,
प्रतिपदविरतौ भासते रगणोऽन्ततः ।
मुनिरचितयति[१]र्नागराजफणिप्रिया ,
सकलतनुभृतां मानसे लसति प्रिया ॥ ३६६ ॥

इदमेव हि यदि वसुयतिः रलिरिति संज्ञां तदाप्नोति ।
लक्षणवाक्ये मुनियतिरुदिता वसुकृतयतिश्च यथा ॥ ३६७ ॥

यथा–

कलय दशमुखारिं हताखिलदानवं ,
मुनिजनमखपालमृषा भुवि मानदम् ।
सरसिजनयनान्तं शरासनभञ्जकं ,
कपिकुलवरराज्ञः सदा प्रियसंज्ञकम् ॥ ३६८ ॥

इति प्रिया १६७.

१६८. अथ उत्सवः

पक्षिराज-नगणौ भगण-द्वितयं ततः
कारयाशु पदशेषकृतो रगणो मतः ।
उत्सवः फणिनागकृतः सखि ! भासते ,
पङ्क्तिजाक्षरविरामयुतः कविमानसे ॥ ३६९ ॥

यथा–

बंभ्रमीति हृदयं जलधौ तरणिर्यथा ,
दह्यते सखि ! तनुर्नलिनीव हिमागमे ।
वायुलोलकदलीव तनुर्मम वेपते ,
चन्दनं शुचि सरोवदिदं परिशुष्यति ॥ ३७० ॥

इति उत्सवः १६९.

---

१ ख. यतिः ।

१६९. अथ उडुगणम् ।

भुवनविरचितमिह लघुमुपनय ,
तदनु विधुकृतलघुमिह विरचय ।
उडुगणमखिलहृदयकृतसदन—
मृषिकृतविरतिमनुकुरु सुवदन ! ।। ३७१ ।।

यथा–

दहनगतमलकनकनिभवसन,
कटिधृतविरुतरुचिरवररसन ।
सुरकृतनमन जलनिधिनिवसन,
शमनुविरचय कुसुमनिभहसन ।। ३७२ ।।

इति उडुगणम् १६९.

'अत्रापि प्रस्तारगत्या पञ्चदशाक्षरस्य द्वात्रिंशत्सहस्राणि सप्तशतानि अष्टषष्ट्युत्तराणि ३२७६८ भेदास्तेषु आद्यन्तसहिताः कियन्तः प्रोक्ताः, शेषभेदाः प्रस्तार्य लक्षणीया इति दिक्'[1]* ।

*इति पञ्चदशाक्षरम् ।*

## अथ षोडशाक्षरम्

तत्र–

१७०. रामः

यस्मिन्नष्टौ पादस्थित्या युक्ताः संदृश्यन्ते कर्णाः,
संशोभन्ते पादे पादे शृङ्गारैः संख्याता वर्णाः ।
यस्मिन् सर्वस्मिन् पादे स्याद् वेदैर्वेदैर्यद्विश्रामः,
सर्पाणामीशेन प्रोक्तः सच्छन्दः स्युः(स्तु) प्रेष्टो रामः ।।३७३।।

यथा–

इन्द्राद्यैर्देवेन्द्रैर्नित्यं वन्द्यः पायाल्लोकं रामः,
लक्षाणां दातृत्वे दक्षः सर्वेषां क्षत्राणां वामः ।
अङ्गीकृत्यात्यन्वं पित्रा दत्तामाज्ञां शस्त्रं वेगात्,
मातुर्मूर्ध्नि च्छेदे[2] बिभ्रद् यो वै हस्ते कम्पं नागात् ।। ३७४ ।।

इदमेवाऽन्यत्र ब्रह्मरूपकम्[2]*इति नामान्तरं लभते ।

इति रामः १७०.

---

१. पंक्तित्रयं नास्ति क. प्रतौ । २. ख. मातर्मूर्द्धच्छेदे ।

* टिप्पणी—१ ग्रन्थान्तरेषु पञ्चदशाक्षरवृत्तस्योपलब्धशेषभेदाः पञ्चमपरिशिष्टे द्रष्टव्याः ।

* टिप्पणी—२ प्राकृतपैंगलम् द्वितीयपरिच्छेद, प० १७४

### १७१. अथ पञ्चचामरम्

शरेण नूपुरेण यत्क्रमेण भाविताक्षरं,
वसुप्रयुक्तभेदभाग् भवेच्च षोडशाक्षरम् ।
फणीन्द्रराजपिङ्गलोक्तमुक्तमत्र भासुरं,
विधेहि मानसे सदैव चारु पञ्चचामरम् ॥ ३७५ ॥

यथा–

कठोरठात्कृतिध्वनत्कुठारधारभीषणं,
स्वयं कृतप्रतिज्ञया सहस्रबाहुदूषणम् ।
समस्तभूमिदक्षिणे मखे मुनीन्द्रतोषणं,
नतो महेन्द्रवासिनं भृगुन्तु[1] वंशभूषणम् ॥ ३७६ ॥

यथा वा, अस्मद्वृद्धप्रपितामह-**श्रीरामचन्द्रभट्ट**महाकविपण्डितविरचित-**दशावतारस्तोत्रे** जामदग्न्यवर्णने—

अकुण्ठधार भूमिदार कण्ठपीठलोचन-
क्षणध्वनद्ध्वनत्कृतिक्वणत्कुठारभीषण ।
प्रकामवाम जामदग्न्यनाम राम हैहय-
क्षयप्रयत्ननिर्दय व्ययं भयस्य जृम्भय ॥ ३७७ ॥

इति पञ्चचामरम् १७१.

एतस्यैव अन्यत्र **नराचम्**[1]*इति नामान्तरम् ।

### १७२. अथ नीलम्

वेद-भकारविराजितमद्भुतवृत्तवरं,
भामिनि ! भावय चेतसि कङ्कणशोभि करम् ।
पिङ्गलनागसुभाषितमालि विमोहकरं,
नीलमिदं रसभूमिविभावितवर्णधरम् ॥ ३७८ ॥

यथा–

पर्वतधारिणि गोपविहारिणि 'नन्दसुते,
सुन्दरि हारिणि'[2] कंसविदारिणि बालयुते ।
पङ्कजमालिनि केलिषु शालिनि मे सुमति-
र्वेणुविराविणि भूम(भ)रहारिणि जातरतिः ॥ ३७९ ॥

इति नीलम् १७२.

---

१. ख. भृगुरुः । '–' २. क. प्रतौ नास्ति ।

*टिप्पणी—१. वाणीभूषणम् द्वितीयाध्याय, पृ० २७३

१७३. अथ चञ्चला

[1]हारमेरुजक्रमेण यद्विराजते सुकेशि !,
षोडशाक्षरेण यद् विकासितं भवेत् सुवेषि ! ।
पिङ्गलेन भाषितं समस्तनागनायकेन,
तद्धि चञ्चलाभिधं कवीन्द्रमोददायकेन ॥ ३८० ॥

यथा–

आलि ! रासजातलास्यलीलया सुशोभितेन,
गैरिकादिधातुवन्यभूषणानुभूषितेन ।
गोपिकाविमोहिराववंशिकाविनोदितेन,
मन्मनो हृतं व्रजाटवीषु केलिमोदितेन ॥ ३८१ ॥

यथा वा, भूषणे[1]*—

आलि ! याहि मञ्जुकुञ्जगुञ्जितालिलालितेन,
भास्करात्मजाविराजिराजि[2]तीरकाननेन ।
शोभिते स्थले स्थितेन सङ्गता यदूत्तमेन,
माधवेन भाविनी तडिल्लतेव नीरदेन ॥ ३८२ ॥

इति चञ्चला १७३.

एतस्यैवान्यत्र चित्रसङ्गम्*[2]इति नामान्तरम् ।

१७४. अथ मदनललिता

कर्णं कृत्वा कनकरुचिरं ताटङ्कसहितं,
संबिभ्राणा द्विजमथ पुनः स्वर्णाढ्यवलया ।
हारौ धृत्वा कुसुमकलितौ हस्तेन रुचिरा,
वेदैः षड्भिर्मदनललिता छिन्ना रसयतिः ॥ ३८३ ॥

यथा–

कालिन्दीये तटभुवि सदा[3] केलीसु ललितं,
राधाचित्तप्रणयसदनं गोपेषु(पीसु) वलितम् ।
संबिभ्राणं विरुतरुचिरं वंशं करतले,
ध्यायेन्नित्यं व्रजपतिसुतं चित्तेऽतिविमले ॥ ३८४ ॥

इति मदनललिता १७४.

---

१. ख. हारमेरुजक्रमेण सद्विराजते पुरेण, यद्विकासितं भवेत् सुकेशि षोडशाक्षरेण ।
२. ख रम्यतीरकाननेन । ३. ख. तटपरिसरे ।

* टिप्पणी–१. वाणीभूषणम्, द्वितीयाध्याय, पद्य २७८
२. छन्दोमञ्जरी, द्वितीयस्तबक, कारिका १४८

### १७५. अथ वाणिनी

कुरु नगणं विधेहि जगणं ततो भकारं,
　　　　जगणमथोऽपि रेफयुतमन्तजातहारम् ।
षडधिकपंक्तिवर्णकलितं सुवृत्तसारं,
　　　　कलयत वाणिनीति कविभिः कृतप्रचारम् ॥ ३८५ ॥

यथा–

अनवरतं खरांशुतनयाचलज्जलौघैः,
　　　　तटभुवि[1]संलुप्ते*[1]ऽखिलनृणां विनाशिताघैः ।
द्विजजनसाधिताऽनुपमसप्ततन्तुभोक्ता,
　　　　पशुपजनैर्हरिः सह वनोदनं जघास[2] ॥ ३८६ ॥

इति वाणिनी १७५.

### १७६. अथ प्रवरललितम्

यकारं पूर्वस्मिन् रचय मगणं धारयाशु,
　　　　नकारं ह्रस्वं च प्रथय रगणं धेहि वासु ।
गुरुं पादस्यान्ते विरचय फणीन्द्रेण गीतं,
　　　　सुहास्ये विश्रामं प्रवरललितं नाम वृत्तम् ॥ ३८७ ॥

यथा–

तडिल्लोलैर्मेघैर्दिशि दिशि महाध्वानवद्भि-
　　　　र्गजानीकाकारैरनवरतमापः सृजद्भिः ।
व्रजं भीतं[3] वीक्ष्य द्रुतमचलराजं कराग्रे,
　　　　दधद्रक्षां कुर्यात् भवजलनिधावत्युदग्रे ॥ ३८८ ॥

इति प्रवरललितम् १७६.

### १७७. अथ गरुडरुतम्

द्विजवरमत्र धेहि रगणं नकारं ततः,
　　　　कुरु रगणं ततोऽपि रगणः पदान्ते मतः ।
षडधिकपंक्तिवर्णकलितं समस्ते पदे,
　　　　गरुडरुतं समस्तफणिराजचित्तास्पदे ॥ ३८९ ॥

---

१. ख. विटपितले लुते ।　२. क. वतोदनं भुक्ति ।　३. ख. छन्नं ।

*टिप्पणी—१ अत्र पादे नगणमनु जगणोपस्थितिर्युक्ता किन्त्वत्र 'संलुप्ते' इति पाठे यगणो जायते तदयुक्तम् ।

यथा–

मृगगणदाहके वननदीसरःशोषके,
ग्रसति तरून् विलोलनिजहेतिजिह्वाशतैः ।
भयभरखिन्न[1]डिम्भवदनं निरीक्ष्याशु यः,
दवदहनं पपौ स दिशतान् मनोवाञ्छितम् ।। ३९० ।।

इति गरुडरुतम् १७७.

१७८. अथ चकिता

देहि भमिह सं कर्णं हारौ कुण्डलमबले !,
धारय कुसुमं पुष्पद्वन्द्वं कामिनि ! तरले ! ।
रूपवलयकं पादप्रान्ते स्यादिह चकिता,
षड्सु च विरतिः काव्यव्यक्तिः स्मरले[2] भविता ।। ३९१ ।।

यथा–

कामिनि ! सुघने वृन्दारण्ये नन्दय नयनं,
भामिनि ! भवने भव्याकारे भावय शयनम् ।
शीतलपवने धन्ये पुण्ये खञ्जननयने,
त्वामिह कलये तल्पेऽनल्पे कुञ्जरगमने ।। ३९२ ।।

इति चकिता १७८.

१७९. अथ गजतुरगविलसितम्

धारय रौहिणेयमथ पतगवरपतिं,
कारय वह्निमेय-नगणवरगुरुयतिम् ।
षोडशवर्णधारि-गजतुरगविलसितं,
भामिनि ! भावयेदमपि मुनियतिरचितम् ।। ३९३ ।।

यथा

सुन्दरि ! नन्दनन्दनमिह धरणिवलये,
मानिनि ! मानदानमपि[3] न हि न हि कलये ।
भावय भावनीयगुणगणपरिकलितं,
चेतसि चिन्तयाशु सखि ! मुनिजनवलितम् ।। ३९४ ।।

इति गजतुरगविलसितम् १७९.

क्वचिद् इदमेव ऋषभगजविलसितम्[1]* इति नामान्तरेणोक्तम् ।

---

१. ख भिन्न । २. ख. तरले । ३. ख. मानगोचरमुमिह न कलये ।
*टिप्पणी—१ वृत्तरत्नाकरः, अ० ३, का० ९१, छन्दोमञ्जरी, द्वि० स्त० का० १४९

१८०. अथ शैलशिखा

धेहि भकारमत्र खगराजमवेहि ततः,
　　कारय नं ततोऽपि भगणो भगणेन युतः ।
नूपुरमेकसंख्यमवधेहि पदान्तगतं,
　　शैलशिखाभिधं त्वमवधारय नागकृतम् ॥ ३९५ ॥

यथा–

गोपवधूमयूरवनितानवमेघनिभः,
　　दानवसङ्घदारणविधावतिसप्रतिभः ।
तुम्बरुनारदादिकमनःसरसीषु गजः,
　　वाञ्छितमातनोतु तव गोपपतेस्तनुजः ॥ ३९६ ॥

इति शैलशिखा १८०.

१८१. अथ ललितम्

कारय भं ततोऽपि रगणं विधेहि नगणं,
　　पक्षिपतिं विधारय पुनस्तथैव नगणम् ।
कङ्कणमन्तगं कुरु समस्तपादविरतौ,
　　धेहि मनः सदैव ललिते फणीश्वरकृतौ ॥ ३९७ ॥

अत्रापि सप्तभिर्नवभिः प्रायो विरतिर्भवतीति उपदिश्यते ।

यथा–

गोपवधूमुखाम्बुजविकासने दिनपतिः,
　　दानवसङ्घमन्तकारिदारणे मृगपतिः ।
लोकभयापहः सकलवन्द्यपादयुगलः,
　　शं कुरुतां ममापि च विलोलनेत्रकमलः ॥ ३९८ ॥

इति ललितम् १८१.

१८२. अथ सुकेसरम्

नगण-सगणौ विधेहि जगणं ततः परं,
　　सगण-जगणौ च नूपुरमशोऽनन्तरम् ।
फणिनृपतिभाषितं रसविधूदिताक्षरं,
　　कलय हृदये सदा सुखकरं सुकेसरम् ॥ ३९९ ॥

यथा–

नरपतिसमूहकण्ठतटघट्टनोद्भवै-
　　रुडुगणनिभैः स्फुलिङ्गनिकरैर्भयानकः ।
विलसति नृपेन्द्रशत्रुगणधूमकेतुवत्,
　　तव रणविधौ स्थितः करतले कृपाणकः ॥ ४०० ॥

इति सुकेसरम् १८२.

१८३. अथ ललना

प्रथमं कलय करतलमात्मना ह्यपथां[1],
ललनां नगणयुगलवतीं जभाकलिताम् ।
फणिराजभणितगुण(रु)विराजितामतुलां,
कलयाशु सपदि सुजनमानसे वलिताम्[2] ।। ४०१ ।।

यथा

विदधातु सकलफलमनारतं तनुते,
सनकादिनिखिलमुनिनतो वने वनिते ! ।
व्रजराजतनय इह सदा हृदा कलितः,
स चराचरजनतनुमहोदधौ फलितः ।। ४०२ ।।

इति ललना १८३.

१८४. अथ गिरिवरधृतिः

शरपरिमितमिह नगणमनु कुरुत,
विधुविरचितमथ लघुमपि रचयत ।
फणिपतिरिति किल मधुरमनुवदति,
कलयत निजहृदि गिरिवरधृतिरिति ।। ४०३ ।।

यथा –

विशिखनिचयहतनिखिलरजनिचर !,
निजभुजयुगबलरणविनिहतखर ! ।
विबुधनिहतभय ! दशमुखकुलहर !,
दशरथनृपसुत ! जय ! जय ! रघुवर ! ।। ४०४ ।।

इति गिरिवरधृतिः १८४.

अचलधृतिः[1]*इत्यन्यत्र ।

[3]अत्रापि प्रस्तारगत्या षोडशाक्षरस्य पञ्चषष्टिसहस्राणि पञ्चशतानि षट्-त्रिंशदुत्तराणि ६५५३६ भेदास्तेषु कियन्तो लक्षिताः, शेषभेदाः प्रस्तार्य स्वेच्छया नामानि चारयज्या (विचार्य) लक्षणीया इत्युपदिश्यते ।[3]

इति षोडशाक्षरम् ।

---

१. ख. ह्यथ ताम् । २. ख. वलितम् । ३. पंक्तित्रयं नास्ति क. प्रतौ ।

*टिप्पणी—१ छन्दोमञ्जरी, द्वितीयस्तबक, का० १५५

,, —२ षोडशाक्षरवृत्तस्योपलब्धशेषभेदाः पञ्चमपरिशिष्टे पर्यालोच्याः ।

## अथ सप्तदशाक्षरम्

तत्र प्रथमम्–

### १८५. लीलाधृष्टम्

वृत्ते यस्मिन्नष्टौ पादे कर्णाः संयुक्ता संदृश्यन्ते,
हारश्चैकः प्रान्ते यस्मिन् वर्णाः शैलश्चन्द्रैः शोभन्ते ।
सर्वेषां नागाणामीशेनैतत्संप्रोक्तं धेहि स्वान्ते,
भूपालानां चित्तानन्दस्थानं लीलाधृष्टाख्यं कान्ते ! ॥ ४०५ ॥

यथा–

वारां राशौ सेतुं बद्ध्वा लङ्कायामातङ्कौघं दास्यन्,
नानावर्णैः सुग्रीवाद्यैः लङ्कायां[1] भिन्नं दुर्गं कुर्वन् ।
सीताचित्ते प्रेमाधिक्यैः लोहैः कीलैर्ग्राव्णीवोत्कीर्णाः,
काकुत्स्थः कल्याणं कुर्याद् युष्माकं क्रव्यादाब्धिं तीर्णः ॥ ४०६॥

इति लीलाधृष्टम् १८५.

### १८६. अथ पृथ्वी

पयोधरविराजिता करसुवर्णवत्कङ्कणा,
सुगन्धकुसुमोज्ज्वला सरसहारसंशोभिनी ।
सुरूपयुतकुण्डला कनकरावसुनूपुरा,
वसुप्रथितसंस्थितिर्जगति भाति पृथ्वी सदा ॥ ४०७ ॥

यथा–

हरिर्भुजगनायकं निजगिरिं भवानीपतिः,
गजेन्द्रममराधिपो निजमरालमब्जासनः ।
द्विजा विबुधकूलिनीं जगति जायमाने नृप !,
त्वदीययशसोज्ज्वले किल गवेषयन्त्यातुराः ॥ ४०८ ॥

यथा वा, कृष्णकुतूहले—

अनेन नयताऽधुना महदुलूखलं शाखिनो,
र्यातियुगमन्तरा ककुभयोरिह क्रामता ।
इतीरयति केचन श्रदधुराशु गोपान्हृदा,
पुरो विहरति स्वके शिशुकदम्बके नापरे ॥ ४०९ ॥

इत्यादि शतशो निदर्शनानि काव्येषु ।

इति पृथ्वी १८६.

---

१. ख. लंकायां ।

### १८७. अथ मालावती

द्विजविलसिता पयोधरविराजिता हारिणी,
सरसकरयुक्सुवर्णवलया लसत्कुण्डला ।
विरुतयुतनूपुरा मुनिदिगीशसंख्याक्षरा,
भुजङ्गपतिभाषिता जगति भाति मालावती ॥ ४१० ॥

**यथा–**

वनचरकदम्बकैरपरसिन्धुशोभाधरैः,
करजदशनायुधैर्जलधिनीरमाच्छादयन् ।
रघुपतिरुपागतः सखि ! निशाचराधीश्वरं,
रणभुवि निहत्य दास्यति तवातुलं सम्मदम् ॥ ४११ ॥

**इति मालावती १८७.**

**मालाधर** इति पिङ्गले[1]* नामान्तरम् ।

### १८८. अथ शिखरिणी

सुरूपं स्वर्णाढ्यं श्रवणमधिताटङ्कयुगलं,
सदा संबिभ्राणा द्विजमथ सुपुष्पाढ्यवलयौ ।
सुरूपं हस्ताग्रं तदनु दधतो राजति रसैः,
शिवैश्छिन्ना नागप्रथितमहिमेयं शिखरिणी ॥ ४१२ ॥

**यथा–**

दिशि स्फारीभूतैः कविनिकरगीतैस्तव रण-
स्तवैर्वात्याचक्रैर्द्विगुणितरयः क्षोणितिलकः ।
प्रतापो दावाग्निस्तव खरकरस्पर्शकठिनो,
विपक्षक्षोणीन्द्रः प्रथितवनमत्र प्रभवति[1] ॥ ४१३ ॥

**यथा वा, ममैव पवनदूते खण्डकाव्ये—**

यदा कंसादीनां निधनविधये यादवपुरीं,
गतः श्रीगोविन्दः पितृभवनतोऽक्रूरसहितः ।
तदा तस्योन्मीलद्विरहदहनज्वालगहने,
पपात श्रीराधाकलिततदसाधारणरतिः ॥ ४१४ ॥

---

१. ख. प्रदति ।

***टिप्पणी** —१ प्राकृतपैंगलम्, द्वितीय परिच्छेद, पद्य १७८

यथा वा, कृष्णकुतूहले—

विना तत्तद्वस्तु क्वचिदपि च भाण्डानि भगवत्,
प्रसादान्ताऽभूवन् प्रतिभवनमित्यद्भुतमभूत् ।
भयोद्यद्वैलक्ष्याऽवितथवचसस्तच्चरणयो-
र्निपेतुस्ता हस्ताहृतवसनमुक्तामणिगणाः ।। ४१५ ।।

यथा वा, रूपगोस्वामिकृत-हंसदूतकाव्ये[1]*—

दुकूलं बिभ्राणो दलितहरितालद्युतिहरं,
जपापुष्पश्रेणीरुचिरुचिरपादाम्बुजतलः ।
तमालश्यामाङ्गो दरहसितलीलाञ्चितमुखः,
परानन्दाभोगः स्फुरतु हृदि मे कोऽपि पुरुषः ।। ४१६ ।।

यथा वा, श्रीशङ्कराचार्यकृत-सौन्दर्यलहरीस्तोत्रे[2]*—

दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा,
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनाऽयं धन्यो भवति न च ते हानिरियता ,
वने वा हर्म्ये वा समकरनिपातो हिमकरः ।। ४१७ ।।[1]

इत्यादि महाकविप्रबन्धेषु शतशो निदर्शनानि द्रष्टव्यानि ।

इति शिखरिणी १८८.

**१८९. अथ हरिणी**

द्विजरसयुता कर्णद्वन्द्वस्फुरद्वरकुण्डला,
कुचतटगतं पुष्पं हारं तथा दधती मुदा ।
विरुतललितं संबिभ्राणं[2] पदान्तगनूपुरं,
रसजलनिधिश्छिन्ना नागप्रिया हरिणी मता ।। ४१८ ।।

यथा–

सपदि कपयः शौर्यावेशस्फुरत्करजद्विजाः,
गिरिवरतरूनुन्मृद्नन्तस्तथोत्पथगामिनः ।
अहमहमिकां कृत्वा वारांनिधेरतिलङ्घने[3],
तटभुवि गताः संप्रेक्षन्ते मुखानि परस्परम् ।। ४१९ ।।

---

१. क. प्रतौ नास्तीदम्पद्यम् । २. ख. संबिभ्राणा । ३. ख. लंघते ।

*टिप्पणी—१ श्रीरूपगोस्वामिकृत-हंसदूतम् प्रथमपद्यम्
२ शंकराचार्यकृत-सौन्दर्यलहरी पद्य ५७

यथा वा, कृष्णकुतूहले—

हसितवदने दृष्ट्वा चेष्टां सुतस्य सविस्मये,
ययतुरथ ते गोपापत्यौ तदद्भुतमन्यतः ।
तदनु कतिचिद् बाला मात्रे बलेन सहोचिरे,
मृदमनुपदं कृष्णः प्राशीदिति प्रतिभाजुषः ॥ ४२० ॥

यथा वा, लक्ष्यलक्षणयुक्तं तत्रैव—

ग्रहिलहृदयोदञ्चत्तत्तद्गतिप्रतिभाजुषां,
त्रिभुवनपतिप्रत्यासत्तिस्फुरत्पुलकस्पृशाम् ।
शिथिलकबरीबन्धस्रस्तस्रजां हरिणीदृशां,
न समरसतः कायप्रायो लघुर्गुरुरप्यभूत् ॥ ४२१ ॥

श्लेषार्थ ऊहनीयः । यथा वा– 'अथ स विषयव्यावृत्तात्मा यथाविधिसूनवे'*।' इत्यादि रघुवंशे महाकाव्यादिसत्कविप्रबन्धेषु च भूमनिदर्शनानि ।

इति हरिणी १८९.

१९०. अथ मन्दाक्रान्ता

कर्णौ पुष्पद्वितयसहितौ गन्धवद्धस्तयुक्ता,
हारं रूपं तदनु वलयं स्वर्णसञ्जातशोभम् ।
संबिभ्राणा विरुतललितौ नूपुरौ वा पदान्ते
मन्दाक्रान्ता जयति निगमैश्छेदयुक्ता रसैश्च ॥ ४२२ ॥

यथा–

सिन्धोष्पारे दशमुखपुरी वानरास्तत्र दूताः,
पम्पाशम्पाशतयुतचलन्नीलमेघावलीकाः ।
वासः केकाकवलिततटे मादृशामृष्यमूके,
दैवो वामः पुनरयमतो भावि किं किं न जाने ॥ ४२३ ॥

---

*टिप्पणी— १. अथ स विषयव्यावृत्तात्मा यथाविधिसूनवे,
नृपतिककुदं दत्वा यूने सितातपवारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये,
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥

[रघुवंश, स० ३, प० ७०]

यथा वा, कृष्णकुतूहले—

हृत्वा ध्वान्तस्थितमपि वसुप्रक्षिपत् पक्ष्म[राजि-]
स्पन्दं विन्दन् व्रजति कुहचित् कैश्चनालक्ष्यमाणः ।
छिद्राणि द्राक् कलयति शयाशक्यशिक्यस्थभाण्डे[1],
निद्रां भंक्त्वा द्रवति जवतस्ताडयत् सुप्तबालात् ।। ४२४ ।। (?)

इति मन्दाक्रान्ता १९०.

### १९१. अथ वंशपत्रपतितम्

कारय भं ततोऽपि रगणं रचय न-भगणौ,
धेहि नकारमेरुवलयान् तदनु सुललितान् ।
व्योमसुधांशुभिः कुरु हयैः तदनु च विरतिः[2],
चेतसि वंशपत्रपतितं रचय फणिकृतम् ।। ४२५ ।।

यथा–

जानकि ! नैव चेतसि कृथा रजनिचरमतिं,
राघवदूततामुपगतं कलय हृदि निजे ।
जल्पति मारुतावििति तदा जनकतनयया-
दत्त[3] न मुद्रिकाऽपि कलिता जलपिहितदृशा ।। ४२६ ।।

यथा वा–

'सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि ।' इति किरातार्जुनीये[1] *।

इति वंशपत्रपतितम् १९१.

स्त्रीलिङ्गमिति केचित् । वंशवदनम् इति शाम्भवे तस्यैव नामान्तरमुक्तम् ।

### १९२. अथ नर्दटकम्

कुरु नगणं ततः कलय जं वद भं च ततो,
जगणयुगं ततो रचय कारय मेरुगुरू ।
फणिपतिभाषितं मुनिविधूदितवर्णधरं,
कविजनमोहकं हृदि विधारय नर्दटकम् ।। ४२७ ।।

---

१. ख. भारो । २. ख. विरतिं । ३. ख. हन्त ।

*टिप्पणी—१ सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि,
क्षीणपयस्युपेयुषि भिदां जलधरपटले ।
खण्डितविग्रहं बलभिदो धनुरिह विविधाः,
पूरयितुं भवन्ति विभवशिखरमणिरुचः ।।४३।।
[किरातार्जुनीयम् स० ५, प० ४३]

यथा–

अनुलवमूर्च्छया क्षपितदेहलता गलता,
नयनजलेन दूषितमुखी[1] तव भूमिसुता ।
रघुवरमुद्रिकां हृदि निधाय सुखातिशयै-
र्मुकुलितलोचना क्षणमभूदमृतस्नपिता ।। ४२८ ।।

यथा वा, श्रीभागवते दशमस्कन्धे वेदस्तुतौ[1]*—

जय ! जय ! जह्यजामजितदोषगृहीत[2]गुणाम् । इत्यादि ।

इति नर्द्दटकम् १९२.

अथ कोकिलकम्

मुनिरसवेदैर्विरतिर्यदि कोकिलकं तदेदमेव भवेत् ।
तदुदाहरणं लक्षणवाक्ये ज्ञेयं सुधीभिरिति ।। ४२९ ।।

यथा वा, छन्दोमञ्जर्याम्[2]*—

लसदरुणेक्षणं मधुरभाषणमोदकरं,
मधुसमयागमे सरसकेलिभिरुल्लसितम् ।
अलिललितद्युतिं रविसुतावनकोकिलकं,
ननु कलयामि तं सखि ! सदा हृदि नन्दसुतम् ।। ४३० ।।

गणविरचना सैव, विरतिकृत एवात्र भेद इति नामान्तरम् ।

इति कोकिलकम् ।

१९३. अथ हारिणी

कर्णं कृत्वा कनकललितं ताटङ्कसंराजितं,
संबिभ्राणा द्विजमथ रुतस्वर्णाचितौ नूपुरौ ।
पुष्पं हारौ सरसवलयं संधारयन्ती मुदा,
वेदैः षड्भिर्विरचितयतिः शैलोदिता हारिणी ।। ४३१ ।।

---

१. ख. दूषितमुखा । २. ख. गृभीतगुणाम् ।

* टिप्पणी—१. जय जय जह्यजामजितदोषगृभीतगुणां
त्वमसि यदात्मना समवरुद्धसमस्तभागः ।
अगजगदोकसामखिलशक्त्यवबोधक ते
क्वचिदजयात्मना च चरतोऽनुचरेन्निगमः ।।
[भागवत-दशमस्कन्ध, अ० ८७, श्लो० १४]

२. छन्दोमंजरी, द्वि० स्त० का० १६७ ।

यथा–

बद्ध्वा सिन्धुं नगरमिह मे रामः समायात्ययं,
　　रोद्धुं[1] श्रुत्वा दशमुख इति प्रीतोऽभवत्तत्क्षणम् ।
बाह्वोः कण्डूं गमयितुमना पश्चान्नरं राघवं,
　　श्रुत्वाऽवज्ञाकलुषितमना लङ्केश्वरोऽभूत्तदा ।। ४३२ ।।

इति हारिणी १९३.

१९४. अथ भाराक्रान्ता

आदौ कुर्यान् मगण-भगणौ ततो नगणो मतः,
　　रेफं दद्यात्तदनुरुचिरं विधेहि करं ततः ।
मेरुं हारं विरचय ततः फणीश्वरभाषिता,
　　भाराक्रान्ता जलनिधिरसैर्विरामयुता मता ।। ४३३ ।।

यथा–

सिन्धोर्बन्धं रघुवरकृतं निशम्य दशाननो,
　　दध्यौ मूर्द्धा[2] सपदि बहुधा व्यधाच्च विधूननम् ।
शङ्के च्योतन्मणिकपटतो रघूत्तमरागिणी,
　　सत्यामाख्यां जगति तनुते तदा कमलालया ।। ४३४ ।।

इति भाराक्रान्ता १९४.

१९५. अथ मतङ्गवाहिनी

हारमेरुजक्रमेण जायते यदा विराजिता,
　　शैलभूमिसंख्यकाक्षरैस्तथा भवेद् विकासिता ।
पण्डितावलीविनोदकारिपिङ्गलेन भाषिता,
　　जायते मतङ्गवाहिनी गुणावलीविभूषिता ।। ४३५ ।।

यथा–

नौम्यहं विदेहजापतिं शरासनस्य 'भञ्जकं,
　　बालिजीवहारिणं विभीषणस्य राज्यसञ्जकम् ।
लक्ष्यवेधने तथा सदा शरासनस्य'[3] धारिणं,
　　रावणद्रुहं कठोरभानुवंशदीप्तिकारणम् ।। ४३६ ।।

इति मतङ्गवाहिनी १९५.

---

१ ख. योद्धुम् । २ ख. मूर्द्धनः । ३. '–' चिह्नगतोंऽशः क. प्रतौ नास्ति ।

### १९६. अथ पद्मकम्

रचय नगणं सं तस्यान्ते धेहि पश्चान्मकारं,
तदनु चरणे तस्य द्वन्द्वं कारयाशु द्विहारम् ।
समुनिविधुभिः पादे छिन्नं पिङ्गलेन प्रयुक्तं,
कलय हृदये छन्दः श्रेष्ठं पद्मकं वृत्तसारम् ॥ ४३७ ॥

यथा–

अयमिह[1] पुरः पारावारः चेतसा गम्यपारः,
सपदि सहितः पादः सङ्घैर्भाषणो वीचिहस्तैः ।
कपिगणमहासेना चेयं पारमुत्प्रेक्षमाणा,
रचय यदिह न्यायं शीघ्रं वानराणां पतेः[2] तत् ॥ ४३८ ॥

इति पद्मकम् १९६.

### १९७. अथ दशमुखहरम्

जलनिधिपरिमित नगणमिह विरचय,
तदनु च शरपरिमितलघुमपि कलय ।
सकलफणिगणनरपतिरिति हि वदति,
सखि ! कलय निजहृदि दशमुखहरमिति ॥ ४३९ ॥

यथा–

जय ! जय ! रघुवर ! जलधितरणनिपुण !,
दशरथसुत ! विबुधनिकरकथितगुण ! ।
सुरविमतदशवदनकुलकदनकर !
सुरगणनुतचरण ! शमिह मम वितर ॥ ४४० ॥

इति दशमुखहरम् १९७.

[3]अत्रापि प्रस्तारगत्या सप्तदशाक्षरस्य एकं लक्षं एकत्रिंशत् सहस्राणि द्विसप्ततिश्च १३१०७२ भेदास्तेषु कियन्तः प्रोक्ताः, शेषभेदाः प्रस्तार्य समुदाहरणीया, इत्यलमतिविस्तरेण[1]* ।

इति सप्तदशाक्षरम् ।

---

१. ख. अयमपि । २. ख. पते । ३. पंक्तित्रयं नास्ति क. प्रतौ ।

*टिप्पणी १—सप्तदशाक्षरवृत्तस्यावशिष्टप्राप्तभेदाः पञ्चमपरिशिष्टेऽवलोडनीयाः ।

पतङ्गदुहितुस्तटीवनकुटीरकेलिप्रिये,
परिस्फुरतु मे मुहुस्त्वयि मुकुन्द शुद्धा रतिः ।

इति विरुदमिदं वर्द्धितः ४.

५. अथ रणश्चण्डवृत्तम्

—त्रि-पञ्च-नव-सप्तमाः ॥ ११ ॥
आदिरेकादशश्चैव श्लिष्टा जो रो जरौ लघुः ।
सर्वशेषे रणाख्ये स्यात्—

[व्या०] इदमत्राकूतम् । यत्र त्रि-पञ्च-नव-सप्तमाः वर्णाः, आदिरेकादशश्चेति च षड्वर्णाः श्लिष्टा भवन्ति । तत्र गणनियममाह—'जो रो जरौ लघुः' जो–जगणः रो–रगणः भवतीति शेषः । अथ च जरौ–जगणरगणौ एव भवतः, ततः सर्वशेषे पदे चैको लघुर्भवति । तत् रणाख्यं सविरुदं महाकलिकारूपचण्डवृत्तं भवति । द्वादशाक्षरमिदं पदम् । चतुर्दशाक्षरं चान्त्यं पदं भवति । विरामद्वयेपि एकैकस्याधिकस्य लघोर्दानादित्याशयः[1] । पदविन्यासस्तु स्वेच्छया भवतीत्युपदेशः । तथा चान्त्यपदे विरामद्वयेपि लघुदानाज्जभलाः–जगण-भगणौ लघवो भवन्तीति वा[2] । यथा—

प्रगल्भविक्रम प्रसर्प्पिसत्क्रम ।

इत्यादि ।

प्रपन्नवर्द्धनक प्रसन्नगर्द्धनक ।

इत्युत्तरम्[3] ।

एतस्य चान्यत्र समग्र इति नामान्तरम् । तथोदाहृतमपि श्रीरूपस्वामिभिः श्रीगोविन्द-विरुदावल्याम् । यथा–

अनिष्टखण्डन[4] स्वभक्तमण्डन
प्रयुक्तचन्दन प्रपन्ननन्दन
प्रसन्नचञ्चल स्फुरद्दृगञ्चल
श्रुतिप्रलम्बक-भ्रमत्कदम्बक
प्रविष्टकन्दरप्रकृष्टसुन्दर-
स्थविष्ठसुन्दरक-प्रसर्पबन्धुरक[5]
देव !
वृन्दारकतरुवीते वृन्दावनमण्डले वीर ।
नन्दितबान्धववृन्द सुन्दरवृन्दारिका रमय ।

---

१. ख. लघ्वोर्दानादित्याशयः । २. ख. च । ३. ख. इत्यन्तम् । ४. गोवि. अरिष्ट-खंडन । ५. गोवि. स्थविष्ठसिन्धुरप्रसर्पबन्धुर ।

खलिनीडुम्बक मुरलीचुम्बक
जननीवन्दक - पशुपीनन्दक
वीर ।

अनुदिनमनुरक्तः पद्मिनीचक्रवाले,
नवपरिमलमाद्यच्चञ्चरीकानुकर्षी ।
कलितमधुरपद्मः कोऽपि गम्भीरवेदी,
जयति मिहिरकन्याकूलवन्याकरीन्द्रः ।

इति सविरुदं समग्रोदाहरणम् ।

इति रणश्चण्डवृत्तम् ५.

६. अथ वीरश्चण्डवृत्तम्

—मभौ नौ वीरचण्डके ॥ १२ ॥
आद्यवर्णात्तु चत्वारो वर्णाः स्युर्मधुरेतराः ।

[व्या०] अस्यार्थः—यत्र मभौ–मगणभगणौ, अथ च नौ–नगणौ भवतः । किञ्च, आद्यवर्णात्–प्रथमाक्षरात् चत्वारो वर्णाः मधुरेतराः– केवल श्लिष्टा एवेत्यर्थः । तत् वीरचण्डकाख्यं चण्डवृत्तं भवति । इदमपि द्वादशाक्षरमेव पदम् । अत्रापि पदविन्यासः पूर्ववदेव । बाहुल्येन द्वादशपदमिदं भवति, तथा दृष्टत्वादिति । यथा–

युद्धक्रुद्धप्रतिभटजयपर ।

इत्यादि ।

एतस्यैव अन्यत्र वीरभद्र इति नामान्तरम् । यथा–

उद्यद्विद्युद्युतिपरिचितपट
सर्प्पत्सर्प्पस्फुरदुरुभुजतट
स्वस्थस्वस्थत्रिदशयुवतिनुत
रक्षद्दक्षप्रियसुहृदनुसृत
मुग्धस्निग्धव्रजजनकृतसुख
नव्यश्रव्यस्वरविलसितमुख
हस्तन्यस्तस्फुटसरसिजवर
सज्जद्गर्ज्जत्खलवृषमदहर
युद्धक्रुद्धप्रतिभटलयकर
वर्णस्वर्णप्रतिमतिलकधर
रुष्यत्तुष्यद्युवतिषु कृतरस
भक्तव्यक्तप्रणय मनसि वस
वीर !

प्रचुरपरमहंसैः काममाचम्यमाने,
प्रणतमकरचक्रैः शश्वदाक्रान्तकुक्षौ ।
अघहर जगदण्डाहिण्डिहिन्दोलहासे,
स्फुरतु तव गभीरे केलिसिन्धौ रतिर्नः ।
उद्‌गीर्णतारुण्य विस्तीर्णकारुण्य
गुञ्जालतापिञ्छपुञ्जाढ्यतापिञ्छ ।
धीर !
उचितः पशुपत्यलंक्रियायै नितरां नन्दितरोहिणीयशोदः ।
तव गोकुलकेलिसिन्धुजन्मा जगदुद्दीपयति स्म कीर्तिचन्द्रः ।

सविरुदं वीरभद्रोदाहरणमिदम् ।

इति वीरश्चण्डवृत्तम् ।६।

७. अथ शाकश्चण्डवृत्तम्

भौ रो लः पञ्चमः श्लिष्टो दीर्घौ नवम-सप्तमौ ॥ १३ ॥
द्वितीयो मधुरः शाके—

[व्या०] अयमर्थः—शाके-शाकाख्ये चण्डवृत्ते प्रथमं भौ–भगणौ, अथ च रो–रगणः, ततो लो–लघुः । किञ्च–पञ्चमो वर्णः श्लिष्टः-संयुक्तो भवति, नवमसप्तमौ दीर्घौ भवतः, द्वितीयो मधुरः–परसवर्णो वर्णो यत्र भवतीत्यर्थः । तत् शाकनामकं चण्डवृत्तं भवति । दशाक्षरं पदं, विन्यासः पूर्ववत् । यथा–

सञ्चितचक्र-भुजाभिराम ।

इत्यादि ।

इति शाकश्चण्डवृत्तम् । ७ ।

८. अथ मातङ्गखेलितं चण्डवृत्तम्

—ह्यथ मातङ्गखेलितम् ।
श्लिष्टौ वा मधुरौ बाणदशमौ रौ यलौ यदि ॥ १४ ॥
बाणे भङ्गश्च[1] मैत्री च प्रथमाष्टमषष्ठकाः ।
तृतीयश्चात्र दीर्घाः स्युः—

[व्या०] इदमत्रानुसन्धेयम्— अथ मातङ्गखेलितं–मातङ्गखेलिताभिधानं चण्डवृत्तं लक्ष्यत इति शेषः । अत्र चार्थे वाकारः । तथा च यत्र 'बाणदशमौ' बाणः–पञ्चमः दशमश्चेति द्वौ वर्णौ श्लिष्टौ मधुरौ–परसवर्णौ च भवतः । तथा रौ–रगणौ, अथ च यलौ–यगणलघू यदि

१. क. बाणेभंङ्गश्च ।

भवतस्तथा बाणे–पञ्चमे भङ्गश्च–मैत्री च यदि भवति, तथा प्रथमाष्टमषष्ठकाः वर्णास्तृतीयश्च वर्णश्चेच्चत्वारोऽत्र वर्णा दीर्घाः स्युस्तदा मातङ्गखेलिताभिधानं चण्डवृत्तं भवति। दशाक्षरं पदमिदम्। अत्र पदविन्यासः स्वेच्छया विधेयः। यथा–

साधितानन्तसारसामन्त।

इत्यादि। यथा वा–

नाथ हे नन्द-गेहिनीशन्द
पूतनापिण्डपातने चण्ड
दानवे दण्डकारकाखण्ड-
सारपौगण्डलीलयोद्दण्ड
गोकुलालिन्दगूढ गोविन्द
पूरितामन्द-राधिकानन्द
वेतसीकुञ्ज-माधुरीपुञ्ज
लोकनारम्भजातसंरम्भ-
दीपितानङ्गकेलिभागङ्ग-
गोपसारङ्ग-लोचनारङ्ग-
कारिमातङ्गखेलितासङ्ग-
सौहृदाशङ्कयोषितामङ्क-
पालिकालम्ब चारुरोलम्ब-
मालिकाकण्ठ कौतुकाकुण्ठ
पाटलीकुन्दमाधवीवृन्द-
सेवितोत्तुङ्गशेखरोत्सङ्ग
मां सदा हन्त पालयानन्त
वीर !

स्फुरदिन्दीवरसुन्दर सान्द्रतरानन्दकन्दलीकन्द।
मां तव पदारविन्दे नन्दय गन्धेन गोविन्द॥

कुन्ददशन मन्दहसन[1]
बद्धरसन रुक्मवसन[2]
देव !

प्रपन्नजनतातमःक्षपणशारदेन्दुप्रभा-
व्रजाम्बुजविलोचना स्मरसमृद्धिसिद्धौषधिः।

---

१. क. 'मन्दहसन' नास्ति। २. गोवि. रुक्मवसन रस्यहसन।

विडम्बितसुधाम्बुधिप्रबलमाधुरीडम्बरा,
बिभर्त्तु तव माधव स्मितकदम्बकान्तिर्मुदम् ।

इति श्रीगोविन्दविरुदावल्यां मातङ्गखेलितप्रत्युदाहरणम् ।

सविरुदमिदं मातङ्गखेलितम् ।८।

९. अथ उत्पलं चण्डवृत्तम्

—भद्वयं चोत्पलं मतम् ।। १५ ।।

श्लिष्टौ द्विपञ्चमौ—

[व्या०] अयमर्थः—भद्वयं-भगणयोर्द्वयं, भगणचतुष्टयमित्यर्थः । लक्ष्ये तथा दर्शनादेवं स्यातम् । किञ्च-तस्मिन्नेव भगणद्वये द्विपञ्चमौ-द्वितीयपञ्चमौ वर्णौ श्लिष्टौ-सरेफ-शिरस्कौ च भवतो यत्र तद् उत्पलनामकं चण्डवृत्तं भवतीत्यर्थः । षडक्षरं भगणद्वयपक्षे, भगण-चतुष्टयपक्षे तु द्वादशाक्षरमेव पदम् । पदविन्यासस्तु पूर्ववदेव । यथा–

सर्वजनप्रिय
सर्वसमक्रिय

इत्यादि । यथा वा, श्रीगोविन्दविरुदावल्याम्—

नर्त्तितशर्क्कर-चर्क्कृतकर्क्कर-
वृद्धमरुद्भर-तर्द्दन निर्भर-
दुष्टविमर्द्दन शिष्टविवर्द्धन
सर्वविलक्षण मित्रकृतक्षण
सद्भुजलक्षित-पर्वतरक्षित-
निष्ठुरगर्ज्जन-खिन्नसुहृज्जन
रुष्टदिवस्पति-गर्वसमुन्नति-
तर्जनविभ्रम निर्गलितभ्रम-
शक्रकृतस्तव विस्फुरदुत्सव
वीर !

बुद्धीनां परिमोहनः किल ह्रियामुच्चाटनः स्तम्भनो
दर्भोदग्रधियां[1] मनःकरटिनां वश्यत्वनिष्पादनः ।
कालिन्दीकलहंस हन्त वपुषामाकर्षणः सुभ्रुवां,
जीयाद् वैणवपञ्चमध्वनिमयो मन्त्राधिराजस्तव ।

१. गोवि. दर्भोदग्रभियाम ।

काननारब्ध-काकलीशब्द-
पाटवाकृष्ट-गोपिकादृष्ट
चातुरीजुष्ट-राधिकातुष्ट
कामिनीलक्ष-मोदने दक्ष
भामिनीपक्ष[1] माममुं रक्ष,
देव !

अजर्जरपतिव्रताहृदयवज्रभेदोद्धुराः,
कठोरतरमानिनी[2]-निकरमानमर्मच्छिदः[3] ।
अनङ्गधनुरुद्धतप्रचलचिल्लिचापच्युताः,
क्रियासुरघविद्विषस्तव मुदं कटाक्षेषवः ।

सविरुदमिदमुत्पलम् ।९।

१०. अथ गुणरतिश्चण्डवृत्तम्

—सो नो, लश्च दीर्घं तृतीयकम् ।
गुणरत्याख्यं—

[व्या०] अस्यार्थः—यत्र सः–सगणः नो–नगणः ततो लश्च–लघुर्भवति । अत्र चतुर्दशाक्षर-पदविन्यासस्य अन्यत्रापि दृष्टत्वात् सनलानामावृत्तिरवगन्तव्या, तेन प्रकृतोट्टवणिका सिद्धिर्भवति । किञ्च, तृतीयकं–तार्तीयमक्षरं दीर्घं भवति । तद् गुणरत्याख्यं चण्डवृत्तं भवति । चतुर्दशाक्षरं पदम् । पदविन्यासः पूर्ववदेव । यथा–

विदिताखिलसुख
सुख(ष)माधिकमुख ।

इत्यादि । यथा वा–

प्रकटीकृतगुण शकटीविघटन
निकटीकृतनवलकुटीवर वन-
पटलीतटचर नटलोल मधुर
सुरभीकृतवन सुरभीहितकर
मुरलीविलसित-खुरलीहृतजग-
दरुणाधर नव-तरुणायतभुज[4]
वरुणालयसमकरुणापरिमल
कलभायितबल-शलभायितखल

---

१. गोवि. भाविनीपक्ष । २. गोवि. कठोरवरवर्णिनी । ३. गोवि. वर्मच्छिदः ।
४. गोवि. करुणायतभुज

धवलाधृतिधर[1] गवलाश्रितकर
सरसीकृतनर सरसीरुहधर
कलशीलितमुख कलशीदधिहर
ललितारतिकर ललितावलिपर
धीर !

हरिणीनयनावृत प्रभो करिणीवल्लभकेलिविभ्रम ।
तुलसीप्रिय दानवाङ्गनाकुलसीमन्तहर प्रसीद मे ।।

चन्दनचर्चित गन्धसमर्चित
गण्डविवर्त्तन-कुण्डलनर्त्तन
सन्दलदुज्ज्वल कुन्दलसद्गल
वञ्जुलकुन्तल[2] मञ्जुलकज्जल
सुन्दरविग्रह नन्दलसद्ग्रह
वीर !

रतिमनुबध्य गृहेभ्यः कर्षति राधां वनाय या निपुणा ।
सा जयति निसृष्टार्था[3] वरवंशजकाकली दूती ।

सविरुदा गुणरतिरियम् ।१०।

११. अथ कल्पद्रुमश्चण्डवृत्तम्

तत्र–

—अन्त्यान्त्यो नवमः श्लिष्टपूर्वगः ।। १६ ।।

कल्पद्रुमे तजौ यश्च श्लिष्टाः षट्-त्रि-नव-द्विकाः ।

[व्या०] कोऽर्थः ? उच्यते—यत्र कल्पद्रुमे चण्डवृत्ते अन्त्यो–यगणः तस्यान्त्यो-नवमो वर्णः श्लिष्टपूर्वगः–श्लिष्टो वर्णः पूर्वगो यस्य स तादृशो भवति । तत्र च गणनियममाह—तजौ–तगणजगणौ, अथ च यश्च–यगणोपि भवति । एवं गणत्रयं यत्र भवति तदेतत् कल्पद्रुमाख्यं चण्डवृत्तं भवति । नवाक्षरमिदं पदम् । पदविन्यासोऽपि पूर्ववत् । किञ्च–षट्त्रिनवद्विकाः–षष्ठतृतीयनवमद्वितीयका वर्णाः श्लिष्टा भवन्ति । यत्र च नवमश्लेषादेव द्वितीये पदे प्रथमवर्णस्य गुरुत्वं भवतीति भावः ।

यथा–

उद्रिक्ततरस्थितगर्व
प्रव्यक्तपरिस्थितसर्व ।[4]

---

१. गोवि. हर । २. गोवि. कुड्मल । ३. गोवि. निसृष्टार्था तव । ४. ख. प्रव्यक्तपरिस्थितशर्व ।

एवं पदान्तरमपि बोद्धव्यम् ।

इति कल्पद्रुमः ।११।

१२. अथ कन्दलश्चण्डवृत्तम्

कन्दले पञ्चमः श्लिष्टो द्वितीये मधुरोऽनु भौ ॥ १७ ॥

[व्या०] कन्दले–कन्दलाख्ये चण्डवृत्ते पञ्चमो वर्णः श्लिष्टो भवति । द्वितीयो वर्णो मधुरः–परसवर्णो भवति । तत्र गणनैयत्यमाह—अत्रास्मिन् भौ–भगणौ एव स्तः । षडक्षरमेव पदम् । तत्कन्दलाभिधानं चण्डवृत्तं भवतीति । यथा–

पण्डितवर्द्धन ।

इत्यादि ।

इति कन्दलः ।१२।

१३. अथ अपराजितञ्चण्डवृत्तम्

षडष्टदशमा दीर्घा द्वितीयो मधुरो यदि ।
अपराजितमेतत्तु भसजाश्च गुरुर्लघुः ॥ १८ ॥

[व्या०] एतदुक्तं भवति । यत्र षडष्टदशमाः–षष्ठाष्टमदशमा वर्णा दीर्घा भवन्ति । द्वितीयो वर्णो यदि मधुरः–परसवर्णो भवति । यदि च भसजाः–भगणसगणजगणाः भवन्ति । अथ च गुरुस्ततो लघुश्चेद् भवति । तदेतत् अपराजिताख्यं चण्डवृत्तं भवति । एकादशाक्षरं पदम् । यथा–

गञ्जितपरवीर धीर हीर ।

इत्यादि ।

इति अपराजितम् ।१३।

१४. अथ नर्त्तनञ्चण्डवृत्तम्

चतुःसप्तमकौ श्लिष्टौ सौ रो लौ यदि नर्त्तनम् ।
अष्टमो मधुरः—

[व्या०] अस्यार्थः—यदि चतुःसप्तमकौ वर्णौ श्लिष्टौ भवतः, अष्टमो वर्णो मधुरः–परसवर्णो भवति । किञ्च, यदि सौ–सगणौ स्याताम् । अथ च रो–रगणः, ततो लौ–लघुद्वयं स्यात् तदा नर्त्तनं–नर्त्तनाख्यं चण्डवृत्तं भवति । इदमप्येकादशाक्षरं पदम् । यथा–

भुवनत्रयशत्रुम्प्रमर्द्दय ।

इत्यादि ।

इति नर्त्तनम् ।१४।

१५. अथ तरत्समस्तञ्चण्डवृत्तम्

—श्लिष्ट-संश्लिष्टमधुरा यदि ॥ १९ ॥

षट्त्रिपञ्चमका जो मः सगणो लघुयुग्मकम् ।
तरत्समस्तमित्याहुः—

[व्या०] एवमुक्तं भवति । यदि षट्त्रिपञ्चमकाः–षष्ठतृतीयपञ्चमा वर्णाः श्लिष्ट-संश्लिष्ट-मधुराः स्युः । तत्र गणनियममाह—जो–जगणः, मो–मगणः, सगणः गुर्वन्तश्चतुष्कलो गणस्ततो लघुयुग्मकं–लघुयुगलं च यदि भवति तदा तरत्समस्तमिति नामकं चण्डवृत्तमाहुश्छान्द-सिकाः । एकादशाक्षरमेव पदम् । यथा–

निरस्तचण्डद्वेषिधराधर

इत्यादि ।

इति तरत्समस्तम् ।१५।

१६. अथ वेष्टनञ्चण्डवृत्तम्

—दीर्घौ षट्पञ्चमौ यदि ।। २० ।।
वेष्टने सप्तमः श्लिष्टो नयौ लघुचतुष्टयम् ।

[व्या०] अयमर्थः—वेष्टने–वेष्टनाख्ये चण्डवृत्तप्रभेदे यदि षट्पञ्चमौ–षष्ठपञ्चमकौ वर्णौ दीर्घौ स्याताम् । सप्तमश्च वर्णः श्लिष्टो भवेत् । गणनियममाह—नयौ–नगणयगणौ स्तः, ततो लघुचतुष्टयं यत्र भवति । दशाक्षरं च पदं भवति । तत् वेष्टनाभिधानं चण्डवृत्तं भवतीति । यथा–

मलयजसारार्च्चितहर ।

इत्यादि ।

इति वेष्टनम् ।१६।

१७. अथ अस्खलितञ्चण्डवृत्तम्

तरौ भलावस्खलिते त्र्यष्टपञ्चमसप्तमाः ।। २१ ।।
संश्लिष्टा दीर्घ आद्यः स्यात्—

[व्या०] कोऽर्थः ? उच्यते—अस्खलिते–अस्खलिताभिधाने चण्डवृत्ते यदि तरौ–तगणरगणौ स्याताम् । अथ च भलौ–भगणलघूस्तः । किञ्च, त्र्यष्टपञ्चमसप्तमाः–तृतीयाष्टमपञ्चम-सप्तमा वर्णाश्चेत् संश्लिष्टा अन्त्ययोगिनः स्युः । आद्यः–प्रथमो वर्णश्चेद् दीर्घः स्यात् तदा अस्खलिताभिधानं चण्डवृत्तं भवति । दशाक्षरमेव पदं भवति । यथा–

आबद्धशुद्धयुद्धप्रणय ।

इत्यादि ।

इति अस्खलितम् ।१७।

१८. अथ पल्लवितञ्चण्डवृत्तम्

—दीर्घौ चेत्तुर्यपञ्चमौ ।
शिथिलो मधुरो वाऽत्र द्वितीयो भतनद्विजाः ।। २२ ।।
एतत् पल्लवितम्—

[व्या०] इदमत्रानुसन्धेयम्। अत्र पल्लविताख्ये चण्डवृत्ते तुर्यपञ्चमौ वर्णौ चेद् दीर्घौ भवतः। द्वितीयो वर्णः शिथिलो मधुरो वा भवति। तत्र प्रायेण मधुर एव श्रुतिसौख्यकृत्। तत्र गणनैयत्यमाह—भतनद्विजाः–भगण-तगण-नगण-द्विजगणाः क्रमेण यत्र भवन्ति। एतत पल्लविताभिधानमिदं चण्डवृत्तं भवति। त्रयोदशाक्षरमिदं पदं भवति। यथा–

रञ्जितनारीजननवमनसिज।

इत्यादि। मधुरद्वितीयवर्णोदाहरणमिदम्।

शिथिलद्वितीयवर्णोदाहरणं, यथा–

वल्लवलीलासमुदयपरिचित
पल्लवरागाधरपुटविलसित
वल्लभगोपीप्रवणित मुनिगण-
दुर्लभकेलीभरमधुरिमकण
मल्लविहाराद्भुततरुणिमधर
फुल्लमृगाक्षीपरिवृतपरिसर
चिल्लिविलासार्पितमनसिजमद
मल्लिकलापामलपरिमलपद
रल्लकराजीहरसुमधुरकल
हल्लकमालापरिचितकचकुल
धीर !
जय चारुहास कमलानिवास
ललनाविलास परिवीतदास
वीर !

वल्लवललनावल्ली-करपल्लवशीलितस्कन्धम्।
उल्लसितः परिफुल्लं भजाम्यहं कृष्णकङ्केल्लिम्।

इति पल्लवितम् ।१८।

### १९. अथ समग्रं चण्डवृत्तम्

—जो रः समग्रं श्लिष्टपञ्चमम्।
तृतीयं मधुरं सर्व-कलान्ते लः—

[व्या०] अस्यार्थः—जो–जगणः रो–रगणश्चेति गणद्वयं आम्रेडनीयमित्युपदेशः। तथा च द्वादशाक्षरपदमिदं समग्रं–समग्राख्यं चण्डवृत्तं भवति। किंविशिष्टं ? श्लिष्टपञ्चमं–श्लिष्टः–सरेफशिरस्कः पञ्चमो वर्णो यत्र। किञ्च, तृतीयमक्षरं मधुरं–परसवर्णं यत्र। सर्वकलान्ते–

अर्धावन्त्ये' पदे लः-एको लघुरधिको देय इत्यर्थः, तेनान्त्यं पदं त्रयोदशाक्षरं भवति। तच्च, जरजभलान्तमित्युपदिश्यते। पदविन्यासस्तु स्वेच्छया विधेयः। यथा–

अनङ्गवर्जन प्रसङ्गसज्जन।

इत्यादि।

अनङ्गमङ्गल प्रसङ्गसञ्जनक।

इत्यन्तम्।

अत्र च मधुरतृतीयत्वादेव विरुदावल्यन्तर-समग्राद् भिन्नमिदं समग्रमिति।

इति समग्रम् ।१९।

२०. अथ तुरग[1]श्चण्डवृत्तम्

—भनौ जलौ ॥ २३ ॥

मधुरौ[2] युग्मनवमौ चेच्चण्डतुरगाह्वयम्।

[व्या०] अयमर्थः— यत्र भनौ-भगण-नगणौ भवतः, ततो जलौ-जगणलघू स्याताम्। किञ्च, युग्मनवमौ वर्णौ चेत् मधुरौ-परसवर्णौ स्तस्तदा तुरगाह्वयचण्डवृत्तं भवतीत्यर्थः। दशाक्षरं पदमिदम्। पदविन्यासः पूर्ववत्। यथा–

पण्डितगुणगणमण्डित।

यथा वा–

सँव्वल[3]विचकिलकुण्डल
मण्डितवरतनुमण्डल
कुण्डलिपतिकृतसङ्गर
दण्डित[4]भुवनभयङ्कर
शङ्करकमलजवन्दित
किङ्करनुतिलवनन्दित[5]
गञ्जितसमदपुरन्दर
चञ्चलदमनधुरन्धर
बन्धुरगतिजितसिन्धुर
चन्दनसुरभितकन्धर
सुन्दरभुजलसदङ्गद[6]
सन्ततसखिगणरङ्गद
झङ्कृतिकरमणिकङ्कण

१. गोवि. तुरंगः। २. क. मधुरं। ३. गोवि. संचल। ४. गोवि. खण्डित। ५. क. किङ्करतुलितवनन्दित। ६. क. भुजबलवङ्गद।

कुन्तललुठदुरुरङ्गण
कुङ्कुमरुचिलसदम्बर
लङ्गिमपरिमलडम्बर
नन्दभवनवरमङ्गल-
[ मञ्जुलघुसृणसुपिङ्गल
हिङ्गुलरुचिपदपङ्कज
सञ्चितयुवतिसदङ्गज ][1]
सन्ततमृगपदपङ्किल
संतनु मयि कुशलङ्किल
वीर !

गिरितटीकुनटीकुलपिङ्गले खलतृणावलिसञ्ज्वलदिङ्गले ।
प्रखरसङ्गरसिन्धुतिमिङ्गिले मम रतिर्वलतां व्रजमङ्गले ।
जय चारुदाम-ललनाभिराम
जगतीललाम रुचिहारिवाम[2]
वीर !

उन्दितहृदयेन्दुमणिः पूर्णकलः कुवलयोल्लासी ।
परितः शार्वरमथनो विलसति वृन्दाटवीचन्द्रः ।

इति तुरगः ।२०।

एते महाकलिकारूपस्य चण्डवृत्तस्य विंशतिः शुद्धाः प्रभेदाः ।

**अथ सङ्कीर्णाः**

तत्र–

**२१. पङ्केरुहं चण्डवृत्तम्**

पङ्केरुहं नयौ षष्ठे भङ्गो मैत्री च दृश्यते ।। २४ ।।
सा चेत् कवर्गरचिता यथा लाभमनुक्रमात् ।
तथैव षष्ठो मधुरः स्वरभेदेऽपि तद्भिदा ।। २५ ।।

**[व्या०] एतस्यार्थः—यत्र नयौ–नगणयगणौ भवतः। तथा षष्ठे वर्णे भंगो मैत्री च दृश्यते । किञ्च, सा मैत्री चेत् कवर्गेण यथालाभमनुक्रमात् रचिता स्यात् । तथा षष्ठो वर्णो मधुरः–परसवर्णो यदि स्यात् तदा पङ्केरुहं नाम चण्डवृत्तं भवति । किञ्च, स्वरभेदेपि–इकारादिस्वर-भेदेपि सति तद्भिदा पङ्केरुहभेदो भवतीति बोद्धव्यम् । षडक्षरमेव पदम् । पदविन्यासोपि पूर्ववदिति बोद्धव्यम् ।**

---

१. [-] कोष्ठगतोंऽशः नास्ति क. प्रतौ । २. गो० वि० रुचिहृतवाम ।

यथा—

जय गतशङ्क
प्रणयविटङ्क
प्रियजनवङ्क
स्मितजितशङ्ख
स्फुटतरशृङ्ग-
ध्वनिधृतरङ्ग
क्षणनटनङ्ग
प्रणयिकुरङ्ग-
व्रजकृतसङ्ग
श्रुतितटरिङ्ग-
न्मधुरसपिङ्ग-
ग्रथितलवङ्ग
स्वनटनभङ्ग-
व्रणितभुजङ्ग
स्तबकिततुङ्ग-
क्षितिरुहशृङ्ग-
स्थितबहुभृङ्ग-
क्वणिततरङ्ग-
प्रवलदनङ्ग-
भ्रमदुरुभृङ्गी-
मुदितकुरङ्गी-
दृगुदितभङ्गी-
त्रदिमभिरङ्गी-
कृतनवसङ्गी-
तक दरवङ्के-
क्षण नवसङ्के-
तकसुदृगङ्के-
शय सकलङ्के-
तरपृषदङ्के-
डितमुख पङ्के-
रुहपद रङ्के .

क्रुपय सपङ्के
किल मयि धीर !

उत्तुङ्गोदयशृङ्गसङ्गमजुषां विभ्रत्पतङ्गत्विषां,
वासस्तुङ्ग[1]मनङ्गसङ्गरकलाशौटीर्यपारङ्गतः ।
स्वान्तं रिङ्गदपाङ्गभङ्गिभिरलं गोपाङ्गनानां किल[2],
भूयास्त्वं पशुपालपुङ्गव दृशोरव्यङ्ग रंगाय मे ॥

विलसदलिकगतकुङ्कुमपरिमल
कटितटधृतमणिकिङ्किणिवरकल
नवजलधरकुललङ्गिमरुचिभर
मसृणमुरलिकलभङ्गिमधुरतर
धीर !

अवतंसितमञ्जुमञ्जरे तरुणीनेत्रचकोरपञ्जरे ।
नवकुङ्कुमपुञ्जपिञ्जरे रतिरास्तां मम गोपकुञ्जरे ।

पङ्केरुहं सविरुदमिदम् । २१ ।

अथ सितकञ्जादयश्चण्डवृत्तस्य चत्वारो भेदा लक्ष्यन्ते । तत्र—

एतावेव गणौ यत्र भङ्गो मैत्री च पूर्ववत् ।
क्रमेण चादिवर्गैस्तु रचिता साऽपि पूर्ववत् ॥ २६ ॥

[व्या०] अस्यार्थः—यत्र एतौ–नगणयगणौ एव–पूर्वोक्तौ गणौ भवतः । किञ्च, भङ्गो मैत्री च पूर्ववत्, षष्ठाक्षर एव भवतीत्यर्थः । एतच्च षष्ठवर्णस्य मधुरत्वमपि लक्षयतीति बोद्धव्यम् । पूर्ववद् इत्यनेनैवोपस्थापितत्वात् । किञ्च, साऽपि मैत्री चादि–चतुर्भिर्वर्गैः पूर्ववत् यथालाभं रचिता चेद् भवति । अपि शब्दात् स्वरान्तरेणाभेदेपि सति तदा तत्तद्भेदो भवतीत्यपि बोद्धव्यम् । षडक्षरमेव पदम् । पदविन्यासोऽपि पूर्ववदेवेति च ॥२६॥

तद्भेदचतुष्टयमाह सार्द्धेन श्लोकेन—

सितकञ्जं तथा पाण्डूत्पलमिन्दीवरं तथा ।
अरुणाम्भोरुहञ्चेति ज्ञेयं भेदचतुष्टयम् ॥ २७ ॥
विरुदेन समं चापि चण्डवृत्तस्य पण्डितैः ।

[व्या०] सितकञ्जं, पाण्डूत्पलं, इन्दीवरं, अरुणाम्भोरुहं चेति सविरुदचण्डवृत्तस्य भेदचतुष्टयं पण्डितैः–अधीतछन्दःशास्त्रनिपुणमतिभिर्ज्ञेयमित्युपदिश्यते ।

उदाहरणमेतेषां क्रमेणैवोच्यतेऽधुना ॥ २८ ॥

---

१. गोवि० तुल्य । २. गोवि० मिलत ।

[व्या०] एतेषां सितकञ्जादिभेदानाम्, शेषं स्पष्टम् । तत्र–

२२. सितकञ्जञ्चण्डवृत्तम्

जय कचचञ्चद्-
द्युतिसमुदञ्च-
न्मधुरिमपञ्च-
स्तवकितपिञ्छ-
स्फुरित विरिञ्च-
स्तुत गिरिगञ्ज[1]-
व्रजपरिगुञ्ज-
न्मधुकरपुञ्ज-
द्रुतमृदुशिञ्ज
द्विषदहिगञ्ज
व्रततिषु खञ्ज-
न्नवरजसञ्ज[2]-
न्मरुदतिपिञ्ज
प्रवलित[3]मुञ्जा-
नलहर गुञ्जा-
प्रिय गिरिकुञ्जा-
श्रित रतिसञ्जा-
गर नवकञ्जा-
मलकर भञ्जा-
निलहर मञ्जी-
रजरवपञ्जी-
परिमलसञ्जी-
वितनवपञ्चा-
शुगशरसञ्चा-
रणजितपञ्चा-
ननमद धीर ।

---

१. गोवि. गिरिकुञ्ज- । २. गोवि. रसमञ्ज- । ३. गोवि. प्रवणित ।

कर्णिकारकृतकर्णिकाद्युतिः कर्णिकापदनियुक्तगैरिका ।
मेचका मनसि मे चकास्तु ते मेचकाभरण भारिणी[1] तनुः ।

मदनरसङ्गत सङ्गतपरिमल
युवतिविलम्बित लम्बितकचभर
कुसुमविटङ्कित टङ्कितगिरिवर
मधुरससञ्चित सञ्चितनरवर[2]
वीर !

भ्रूमण्डलताण्डवितप्रसूनकोदण्डचित्रकोदण्ड ।
हृतपुण्डरीकगर्भं मण्डय मे[3] पुण्डरीकाक्ष ।

सविरुदं सितकञ्जमिदम् ।२२।

२३. अथ पाण्डूत्पलञ्चण्डवृत्तम्

जय जय दण्ड-
प्रिय कचखण्ड-
ग्रथितशिखण्ड-
दृ.ज शशिखण्ड-
स्फुरणसपिण्ड-
स्मितवृतगण्ड
प्रणयकरण्ड
द्विजपतितुण्ड
स्मररसकुण्ड
क्षतफणिमुण्ड
प्रकटपिचण्ड-
स्थितजगदण्ड
क्वणदणुघण्ट
स्फुटरणघण्ट
स्फुरदुरुशुण्डा-
कृतिभुजदण्डा-
हृतखलचण्डा-
सुरगण पण्डा-

---

१. गोवि. भाविनी । २. गोवि. पंक्तिरियं नास्ति । ३. गोवि. मम ।

जनितवितण्डा-
जितबल भण्डी-
रदयित खण्डी-
कृतनवडिण्डी-
[illegible] ह
गण कलकुण्डी[1]-
कृतकलकण्ठी-
कुल मणिकण्ठी-
स्फुरितसुकण्ठी-
प्रिय वरकण्ठी-
रवरण वीर !

दण्डी कुण्डलिभोगकाण्डनिभयोरुद्दण्डदोर्दण्डयोः,
शिलष्टश्चण्डिमडम्बरेण निविडश्रीखण्डपुण्ड्रोज्ज्वलः ।
निर्द्धूतोद्यदचण्डरश्मिघटया तुण्डश्रिया मामकं
कामं मण्डय पुण्डरीकनयन त्वं हन्त हृन्मण्डलम् ।
कन्दर्पकोदण्ड-दर्प्पक्रियोद्दण्ड-
दृग्भङ्गिकाण्डीर संजुष्टभाण्डीर
धीर !

त्वमुपेन्द्र कलिन्दनन्दिनी-तटवृन्दावनगन्धसिन्धुर ।
जय सुन्दरकान्तिकन्दलैः स्फुरदिन्दीवरवृन्दबन्धुभिः ।
**सविरुदं पाण्डूत्पलमिदम् ।२३।**

**२४. अथ इन्दीवरम्**

जय जय हन्त
द्विष दभिहन्त-
मंधुरिमसन्त-
र्पितजगदन्त-
मृंदुल वसन्त-
प्रिय सितदन्त-
[ स्फुरितदिगन्त
प्रसरदुदन्त ][2]

---

१. मोवि. कुण्ठी । २. पंक्तिद्वयं नास्ति क. प्रतौ ।

प्रभवदनन्त-
प्रियसख सन्त-
स्त्वयि रतिमन्तः
स्वमुदहरन्त ][1]
प्रभुवर नन्दा-
त्मज गुणकन्दा-
सितनवकन्दा-
कृतिधर[2] कुन्दा-
मलरद तुन्दा-
त्तभुवन वृन्दा-
वनभवगन्धा-
स्पदमकरन्दा-
न्वितनवमन्दा-
रकुसुमवृन्दा-
र्चितकच वन्दा-
रुनिखिलवृन्दा[3]-
रकवरबन्दी-
डित विधुसन्दी-
पितलसदिन्दी-
वरपरिनिन्दी-
क्षणयुग नन्दी-
श्वरपतिनन्दी-
हित जय वीर !

स्मितरुचिमकरन्दस्यन्दि वक्त्रारविन्दं,
तव पुरुपरहंसान्विष्ट गन्धं मुकुन्द ।
विरचित[4]पशुपालीनेत्रसारङ्गरङ्गं,
मम हृदयतडागे सङ्गमङ्गीकरोतु ।

अम्बरगतसुरविनतिविलम्बित
तुम्बरुपरिभविमुरलिकरम्बित

---

[–] १. पंक्तिचतुष्टयं नास्ति क. प्रतौ । २. गोवि. धृतिधर । ३. ख. पंक्तिरियं नास्ति । ४. गोवि. परिचित ।

शम्बरमुखमृगनिकरकुटुम्बित
संभ्रमवलयितयुवतिविचुम्बित
धीर !

अम्बुजकुटुम्बदुहितुः कदम्बसम्बाधबन्धुरे पुलिने ।
पीताम्बर कुरु केलिं त्वं वीर ! नितम्बिनीघटया ।।

सविरुदमिदमिन्दीवरम् ।२४।

२५. अथ अरुणाम्भोरुहञ्चण्डवृत्तम्

जय रससम्पद्-विरचितझम्प
स्मरकृतकम्प-प्रियजनशम्प
प्रवणितकम्प-स्फुरदनुकम्प
द्युतिजितशम्प-स्फुटनवचम्प-
श्रितकचगुम्प श्रुतिपरिलम्ब-
स्फुरितकदम्ब स्तुतमुख डिम्भ-
प्रिय रविबिम्बो-दयपरिजृम्भो-
न्मुखलसदम्भो-रुहमुख लम्बो-
द्भटभुज लम्बो-दरवरकुम्भो-
पमकुचबिम्बो-ष्ठयुवतिचुम्बो-
द्भट परिरम्भोत्सुक कुरु शं भो-
स्तडिदवलम्बो-जितमिलदम्भो-
धरसुविडम्बो-द्धुर नतशम्भो
रपिजितदम्भो[1]-लिगरिमसम्भा-
वितभुजजृम्भा[2]-हितमद लम्पा-
कमनसि सम्पादय मयि तं पा-
किममनुकम्पालवमिह धीर !

दिव्ये दण्डधरस्वसुस्तटभवे फुल्लाटवीमण्डले,
वल्लीमण्डपभाजि लब्धमदिरस्तम्बेरमाडम्बरः ।
कुर्वन्नञ्जनपुञ्जगञ्जनमति श्यामाङ्गकान्तिश्रिया,
लीलापाङ्गतरङ्गितेन तरसा मां हन्त सन्तर्पय ।

१. गोवि. परिजितदम्भो । २. ख. तुम्भा; गोवि. जम्भा ।

अम्बुजकिरणविडम्बक खञ्जनपरिचलदम्बक
चुम्बितयुवतिकदम्बक कुन्तललुठितकदम्बक
वीर !

प्रेमोद्वेल्लितवल्गुभिर्वलयितस्त्वं वल्लवीभिर्विभो !
रागोल्लापितवल्लकीविततिभिः कल्याणवल्लीभुवि ।
सोल्लुण्ठं मुरलीकलापरिमलं[1] मल्लारमुल्लासयन्,
बाल्येनोल्लसिते दृशौ मम तडिल्लीलाभिरुत्फुल्लय ।

सविरुदमिदमरुणाम्भोरुहम् ।२५।

एते कादिपञ्चवर्गोत्थापिताः पञ्चचण्डवृत्तस्य महाकलिकारूपस्य सङ्कीर्णाः प्रभेदाः ।

## अथ गर्भिताः

तत्र प्रभेदाः—

### २६. फुल्लाम्बुजञ्चण्डवृत्तम्

षष्ठे भङ्गश्च मैत्री च नयावेव गणौ यदि ।
अन्तस्थस्य तृतीयेन यदि मैत्रीकृता भवेत् ।। २९ ।।
स्वरोपस्थापिता श्लिष्टा रमणीयतरा क्वचित् ।
फुल्लाम्बुजं तदुद्दिष्टं चण्डवृत्तं सुपण्डितैः ।। ३० ।।

[व्या०] **कोऽर्थः ? उच्यते—यदि नयावेव—नगणयगणावेव गणौ स्तः । षष्ठे वर्णे भङ्गो मैत्री च यदि अन्तस्थस्य यवर्गस्य तृतीयेन लकारेण कृता भवेत् । सापि क्वचित् स्वरोपस्थापिता श्लिष्टा च स्यात् । तदा एतद्देशादृतमिदं नामतः फुल्लाम्बुजं इति प्रसिद्धं सुपण्डितैश्चण्डवृत्तमुद्दिष्टं—कथितमित्यर्थः । यथा—**

व्रजपृथुवल्ली[2]-परिसरवल्ली-
वनभुवि तल्लीगणभृति मल्ली-
मनसिजभल्ली-जितशिवमल्ली-
कुमुदमतल्लीजुषि गत झिल्ली-
परिषदि हल्ली-सकसुखझिल्ली[3]-
रत परिफुल्ली-कृतचलचिल्ली-

---

१. गोवि. कलाभिरमल । २. गोवि. पल्ली । ३. गोवि. झल्ली ।

जितरतिमल्लीमद भर सल्ली-
लतिलक कल्या-तनुशततुल्या-
हृवरसकुल्या-चटुतिलखल्या-
प्रमथन कल्याणचरित धीर ।

गोपीः सम्भृतचापल-चापलताचित्रया भ्रुवा भ्रमयन् ।
विलस यशोदावत्सल वत्सलसद्धेनुसंवीत ।

[1]*वल्लवललनालीलावलयित
पल्लवरचना मल्लीविलसित
वल्लभकलनाखेलासमुदित
तल्लवघटना नीलालकवृत ।

तव चरणाम्बुजमनिशं विभावये नन्दगोपाल ।
गोपालनाय वृन्दावनभुवि यद् रेणुरञ्जिता धरणी ।*

सविरुदं फुल्लाम्बुजमिदम् ।२६।

---

१ *-*टिप्पणी—सङ्केतान्तर्गतांशस्य स्थाने निम्नांशो वर्त्तते गोविन्दविरुदावल्याम् । परञ्च वृत्तमौक्तिककृता चायमंशः पल्लवितञ्चण्डवृत्तस्य शिथिलद्वितीयवर्णोदाहरणरूपेण स्वीकृतः, स च २३३ पृष्ठेऽवलोकनीयो विद्वद्भिः ।

वल्लवलीलासमुदयसमुचित
पल्लवरागाधरपुटविलसित
वल्लभगोपीप्रवणित मुनिगण-
दुर्लभकेलीभरमधुरिमकण
मल्लविहाराद्भुततरुणिमधर
फुल्लमृगाक्षीपरिवृतपरिसर
चिल्लिविलासार्पितमनसिजमद
मल्लिकलापामलपरिमलपद
रल्लकराजीहरसुमधुरकल
हल्लकमालापरिवृतकचकुल
वीर !

वल्लवललनावल्ली-करपल्लवशीलितस्कन्धम् ।
उल्लसितः परिफुल्लं भजाम्यहं कृष्णकङ्केल्लिम् ॥

### २७. अथ चम्पकचण्डवृत्तम्

द्वितीयो मधुरो यत्र श्लिष्टः क्वापि भवेद् यदि ।
भनौ षडक्षरं चैतत् स्वेच्छातः पदकल्पनम् ।। ३१ ।।

चम्पकं चण्डवृत्तं स्यात्—

[व्या०] अस्यार्थः—[1]यत्र द्वितीयो वर्णो मधुरः–परसवर्णो भवेत् । क्वापि–कुत्रचित् यदि श्लिष्टोपि स्यात् ।[1] तत्र गणनियममाह— भनौ–भगणनगणौ गणौ भवेताम् । षडक्षरं चैतत् पदम् । किञ्च, पदकल्पनं स्वेच्छातो यत्र भवति तदेतच्चम्पकं नाम चण्डवृत्तं स्यात् । यथा—

सञ्चलदरुण[2]-सुन्दरनयन
कन्दरशयन वल्लवशरण
पल्लवचरण मङ्गलघुसृण-
पिङ्गलमसृण चन्दनरचन
नन्दनवचन खण्डितशकट
दण्डितविकट-गर्वितदनुज
पर्वितमनुज रक्षितधवल
लक्षितगवल पन्नगदलन
सन्नगकलन वन्धुरवलन
सिन्धुरचलन[3] कल्पितसदन[4]-
जल्पितमदन[5] मञ्जुलमुकुट
वञ्जुललकुट-रञ्जितकरभ
गञ्जितशरभ-मण्डलवलित
कुण्डलचलित-सन्दितलपन
नन्दिततपन-कन्यकसुषम
धन्यककुसुम[6]-गर्भक धरण[7]-
दर्भकशरण तर्णकवलित
वर्णकललित शं वरवलय
डम्बर कलय
देव

१-१. ख. प्रतौ नास्ति पाठः । २. गोवि. संचलदरुणचञ्चलकरुणसुन्दरनयन । ३. क. वदन । ४. गोवि. मदन । ५. गोवि. सदन । ६. गोवि. वन्यककुसुम । ७. गोवि. विरण ।

दानवघटालवित्रे धातुविचित्रे जगच्चित्रे ।
हृदयानन्दचरित्रे रतिरास्तां वल्लवीमित्रे ।
रिङ्गदुरुभृङ्ग-तुङ्गगिरिशृङ्ग-
शृङ्गरुतभङ्ग-सङ्गधृतरङ्ग
वीर !

त्वमत्र चण्डासुरमण्डलीनां रण्डावशिष्टानि गृहाणि कृत्वा ।
पूर्णान्यकार्षीर्निजसुन्दरीभिर्वृन्दाटवीपुण्ड्रकमण्डपानि ।।

सविरुदं चम्पकमिदम् ।२७।

२८. अथ वञ्जुलञ्चण्डवृत्तम्

—वञ्जुलं नजला यदि ।
पञ्चमो मधुरस्तत्र पदं मुनिमितं मतम् ।। ३२ ।।

[व्या०] अयमर्थः—यदि नजलाः—नगणजगणलघवः स्युः । किञ्च, तत्र पदे पञ्चमो वर्णो मधुरः—परसवर्णो भवति । पदमपि मुनिभिः—सप्तभिर्वर्णैर्मितं—परिमितं यत्र तत् वञ्जुलं—वञ्जुलाख्यमतिमञ्जुलं चण्डवृत्तं मतं—सम्मतमित्यर्थः । पदकल्पनं तु पूर्ववत् । यथा—

जय जय सुन्दर-विहसित मन्दर-
विजितपुरन्दर निजगिरिकन्दर-
रतिरसशन्धर मणियुतकन्धर
गुणमणिमन्दिर हृदि वलदिन्दिर
गतिजितसिन्धुर परिजनबन्धुर
पशुपतिनन्दन तिलकितचन्दन
विधिकृतवन्दन पृथुहरिचन्दन-
परिवृतनन्दन[1]-मधुरिमनिन्दन[2]-
मधुवन वन्दित-कुसुमसुगन्धित-
वनवररञ्जित रतिरभसञ्जित[3]
शिखिदलकुण्डल-सहकृतभण्डिल
नवसिततण्डुल-जयिरदमण्डल
रतिरणपण्डित वरतनुभण्डित
नखपदमण्डित दशनविखण्डित
धीर !

---

१. पंक्तिरियं नास्ति ख. प्रतौ । २. क. मधुरिमनन्दन- । ३. गोवि. रतिभरसञ्जित ।

निनिन्द निजमिन्दिरा वपुरवेक्ष्य यासां श्रियं,
विचार्य गुणचातुरीमचलजा च लज्जां गता ।
लसत्पशुपनन्दिनीततिभिराभिरानन्दितं,
भवन्तमतिसुन्दरं व्रजकुलेन्द्र वन्दामहे ।

रसपरिपाटी स्फुटतरुवाटी
मनसिजधाटी प्रियनतशाटी[1]-
हर जय वीर !

सम्भ्रान्तैः सषडङ्गपातमभितो वेदैर्मुदा वन्दिता,
सीमन्तोपरि गौरवादुपनिषद्देवीभिरप्यर्पिता ।
आनम्रं प्रणयेन च प्रणयतो तुष्टामना[2] विक्रुतो[3],
मृद्वी ते मुरलीरुतिर्मुररिपोः शर्माणि निर्मातु नः ।

सविरुदं वञ्जुलमिदम् ।२८।

२९. अथ कुन्दञ्चण्डवृत्तम्

द्वितीयषष्ठौ मधुरौ श्लिष्टौ वा क्वापि तौ यदि ।
स्याताम् भजौ तदा कुन्दम्—

[व्या०] एतदुक्तं भवति । यदि द्वितीयषष्ठौ वर्णौ मधुरौ—परसवर्णौ क्वापि पदे श्लिष्टौ वा, तौ वर्णौ स्याताम् । अथ च भजौ—भगणजगणौ भवतः, तदा कुन्दं इति नाम चण्डवृत्तं भवति । षडक्षरमिदं पदम् । पदविन्यासस्तु पूर्ववत् । यथा—

नन्दकुलचन्द्र लुप्तभवतन्द्र
कुन्दजयिदन्त दुष्टकुलहन्त
रिष्टसुवसन्त मिष्टसदुदन्त
संदलितमल्लि-कन्दलितवल्लि-
गुञ्जदलिपुञ्ज-मञ्जुतरकुञ्ज-
लब्धरतिरङ्ग हृद्यजनसङ्ग-
शर्मलसदङ्ग हर्षकृदनङ्ग
मत्तपरपुष्ट-रम्यकलघुष्ट
गन्धभरजुष्ट पुष्पवनतुष्ट
कृत्तखलक्ष[4] युद्धनयदक्ष

---

१. गोवि. प्रियनवशाटी- । २. गोवि. हृष्टात्मना । ३. गोवि. भिष्टुता । ४. गोवि. यक्ष ।

वल्गुकचपक्ष-[वद्धशिखिपक्ष][1]
पिष्टनततृष्ण तिष्ठ हृदि कृष्ण
वीर !
तव कृष्ण केलिमुरली हितमहितं च स्फुटं विमोहयति ।
एवं सुधोर्मिसुहृदा विषविषमेणापरं ध्वनिना ।

सन्नीतदैतेयनिस्तार कल्याणकारुण्यविस्तार
पुष्पेषुकोदण्डटङ्कार-विस्फारमञ्जरीझङ्कार
धीर !
रङ्गस्थले ताण्डवमण्डनेन[2] निरस्य मल्लोत्तमपुण्डरीकान् ।
कंसद्विपं चण्डमखण्डयद् यो हृत्पुण्डरीके स हरिस्तवास्तु ।

सविरुदं कुन्दमिदम् ।२६।

३०. अथ वकुलभासुरञ्चण्डवृत्तम्

—अथो[3] वकुलभासुरम् ।। ३३ ।।
चतुर्भिस्तुरगैः निर्जैः पदं यत्रातिसुन्दरम् ।
रसेन्दुमात्रं सोल्लालं—

[व्या०] अस्यार्थः—अथ–कुन्दानन्तरं बकुलभासुरं इति नामकं चण्डवृत्तं कथ्यत इति शेषः। यत्र चतुर्भिः–चतुःसंख्याकैः निर्जैः–जगणविरहितैः चतुर्विधैस्तुरगैः–चतुष्कलैः द्विजगण-कर्ण-भगण-[4] सगणैरेवातिसुन्दरं–अतिरमणीयं, रसेन्दुमात्रं–षोडशमात्रं पदं भवति। तच्च पदं उत्सर्गसिद्धं षोडश-विंशकावधिबाणाधिकं विधेयमित्युपदेशः । किञ्च, सोल्लालं–उल्ललनमेव उल्लालः परावर्त्तनं तेन सहितं शृङ्खलाबद्धन्यायेन घटितमित्यर्थः। तदीदृशं बकुलभासुरं चण्डवृत्तं सविरुदं भवतीति वाक्यार्थः। यथा–

जय जय वंशीवाद्यविशारद
शारदसरसीरुहपरिभावक-
भावकलितलोचनसञ्चारण
चारणसिद्धवधूधृतिहारक
हारकलापरुचाश्रितकुण्डल[5]
कुण्डलसित[6]गोवर्द्धनभूषित
भूषितभूषणविच्छन[7]विग्रह
विग्रहखण्डितखलवृषभासुर

---

१. [ - ] क. ख. नास्ति पाठः । २. गोवि. मण्डलेन । ३. ख. अथ । ४. ख. तगणसगणौ- । ५. गोवि. रुचाञ्चितकुण्डल । ६. गोवि. कुण्डलमद् । ७. गोवि. चिद्घन- ।

भासुरकुटिलकचार्पितचन्द्रक
चन्द्रकदम्व[1] रुचाभ्यधिकानन
काननकुञ्जगृहस्मरसङ्गर
सङ्गरसोद्‌धुरवाहुभुजङ्गम
जङ्गमनवतापिञ्छनगोपम
गोपमनीषितसिद्धिषु दक्षिण
दक्षिणपाणिगदण्डसभाजित
भाजितकोटिशशाङ्कविरोचन
रोचनया कृतचारुविशेषक
शेषकमलभवसनकसनन्दन-
नन्दनगुण मा नन्दय सुन्दर
[2]सुन्दर मामव भीतिविनाशन[2]
वीर !

भवतः प्रतापतरणावुदेतुमिह लोहितायति स्फीते ।
दनुजान्धकारनिकराः शरणं भेजुर्गुहाकुहरम् ॥

पुलिनधृतरङ्ग-युवतिकृतसङ्ग
मदनरसभङ्ग-गरिमलसदङ्ग
धीर !

पशुषु कृपां तव दृष्ट्वा दुष्ट[3]महारिष्टवत्सकेशिमुखाः ।
दर्पं विमुच्य भीताः पशुभावं भेजिरे दनुजाः ॥

सविरुदं बकुलभासुरमिदम् ।३०।

३१. अथ बकुलमङ्गलञ्चण्डवृत्तम्

—अन्तो वकुलमङ्गलम् ॥ ३४ ॥

चतुर्भिर्भगणैरेव हयैर्यत्र पदं भवेत् ।
रसेन्दुकलकं तत्र तृतीये शृङ्खलास्थिता ॥ ३५ ॥

[व्या०] कोऽर्थः ? उच्यते । अन्तः–बकुलभासुरानन्तरं बकुलमङ्गलं–बकुलमङ्गलाख्यं चण्डवृत्तमुच्यत इति शेषः ॥३४॥

यत्र चतुर्भिः–चतुःसंख्याकैः केवलैरादिगुरुकैः–भगणैरेव हयैः–चतुष्कलैः रसेन्दुकलकं–षोडशमात्रं पदं भवेत् । किञ्च, तत्र–तस्मिन्पदे तृतीये अर्थात् तृतीये भगणे शृङ्खलास्थिता चेद्–

१. गोवि. चन्द्रकलाप– । २. गोवि. पंक्तिरियं नास्ति । ३. गोवि. नून ।

भवति, तदा बकुलमङ्गलाभिधानं चण्डवृत्तं सविरुदं भवतीति वाक्यार्थः । पदविन्यासोपदेशस्तु पूर्ववदेव । षोडशमात्रत्वमुभयत्र समानं । परं तु चतुर्थभगणघटनमध्यशृङ्खलाबन्धनमात्रमेव बकुलभासुराद् भेदं बोधयतीत्यवधेयं सुधीभिरिति शिवम् ॥३५॥

यथा–

त्वं जय केशव केशवलस्तुत
वीर्यविलक्षण लक्षणबोधित
केलिषु नागर नागरणोद्धत
गोकुलनन्दन नन्दनतिव्रत-
सान्द्रमुदर्प्पक दर्प्पकमोहन
हे सुषमानवमानवतीगण-
माननिरासक रासकलाश्रित
सस्तनगौरवगौरवधूवृत[1]
कुञ्जशतोषित तोषितयौवत
रूपभराधिकराधिकयार्चित
भीरुविलम्बित लम्बितशेखर
केलिकलालस[2]लालसलोचन
शेषमदारुणदारुणदानव-
मुक्तिदलोकन लोकनमस्कृत-
गोपसभावक भावकशर्मद
हन्त कृपालय पालय मामपि
देव ![3]

पलायनं[4] फेनिलवक्त्रतां च बन्धं च भीतिं च मृतिं च कृत्वा ।
पवर्गदातापि शिखण्डमौले त्वं शात्रवाणामपवर्गदोऽसि ॥

प्रणयभरित - मधुरचरित
भजनसहित - पशुपमहित
देव !

अनुभूय विक्रमं ते युधि लब्धाः कांदिशीकत्वम् ।
हित्वा[5] किल जगदण्डं प्रपलायांचक्रिरे दनुजाः ।

सविरुदं बकुलमङ्गलमिदम् ।३१।

---

१. क. कृत । २. गोवि. केलिकुलालस- । ३. गोवि. वीर । ४. गोवि. परांभवं ।
५. गोवि. भित्वा ।

### ३२. अथ मञ्जर्यां कोरकश्चण्डवृत्तम्

मञ्जरी चात्र पूर्वं श्लोको लेखस्तदनन्तरम् ।
कोरकाख्यं चण्डवृत्तं पदसंख्यानखैर्यदि ।। ३६ ।।

[व्या०] अस्यार्थः—अभिधीयत इत्यर्थः । प्रथमतो मञ्जरी ततः कलिका भवतीति लौकिकानां प्रसिद्धेः । तत्र चतुर्भिः भगणैः शुद्धैराद्यन्तयमकाङ्कितैः कोरकाख्यं चण्डवृत्तं । यदि पदस्य आद्यन्तयोर्यमकाङ्कितैः–यमकेन अङ्कितैः सयमकैरिति यावत्, शुद्धैः–शृङ्खलारहितैश्चतुर्भिः भगणैः–आदिगुरुकैर्गणैः पदम् । अथ च पदसंख्या यदि नखैः–विंशत्या भवति, तदा कोरकाख्यं चण्डवृत्तं भवति । शृङ्खलाराहित्यमेवात्र पूर्वस्माद् भेदं गमयतीति ।।३६।।

तत्र प्रथमं मञ्जरी, यथा–

नवशिखिशिखण्डशिखरा[1] प्रसूनकोदण्डचित्रशस्त्रीव ।
क्षोभयति कृष्ण वेणी श्रेणीरेणीदृशां भवतः ।।

कोरकम्, यथा–

मानवतीमदहारिविलोचन
दानवसञ्चयघूकविरोचन
डिण्डिमवादिसुरालिसभाजित
चण्डिमशालिभुजार्गलराजित
दीक्षितयौवतचित्तविलोभन-
वीक्षित सुस्मितमार्दवशोभन
पर्वतसम्भृति[2] निर्धुतपीवर-
गर्वतमःपरिमुग्धशचीवर[3]
रञ्जितमञ्जुपरिस्फुरदम्बर
गञ्जितकेशिपराक्रमडम्बर
कोमलताङ्कितवागवतारक
सोमललाममहोत्सवकारक
हंसरथस्तुतिशंसितवंशक
कंसवधूश्रुतिनुन्नवतंसक
रङ्गतरङ्गितचारुदृगञ्चल
सङ्गतपञ्चशरोदयचञ्चल
लुञ्चितगोपसुतागणशाटक
सञ्चितरङ्गमहोत्सवनाटक
तारय मामुरुसंसृतिशातन

१. क. शिखण्डिशिखराः । २. गोवि. पर्वतसंधृति- । ३. ख. शशीवर ।

धारय लोचनमत्र सनातन
धीर !

तुरगदनुसुताङ्गग्रावभेदे दधानः,
कुलिशघटितटङ्कोद्दण्डविस्फूर्जितानि ।
तदुरुविकटदंष्ट्रोन्मु(मृ)ष्टकेयूरमुद्रः,
प्रथयतु पटुतां वः कैशवो वामबाहुः ।

माधव विस्फुर दानवनिष्ठुर
यौवतरञ्जित सौरभसञ्जित
वीर !

पलितंकरणी दशा प्रभो मुहुरन्धंकरणी च मां गता ।
सुभगंकरणी कृपा शुभैर्न तवाढ्यंकरणी च मय्यभूत् ।।

सविरुदः कोरकोऽयम् ।३२।

३३. अथ गुच्छकचण्डवृत्तम्

नसौ जनौ जलौ क्रमात् प्रयोजितौ बुधा यदा ।
तदा तु चण्डवृत्तकं विभावयन्तु गुच्छकम् ।। ३७ ।।

[व्या०] अयमर्थः—हे बुधाः ! यदा नसौ–नगणसगणौ, अथ च जनौ–जगणनगणौ, ततश्च जलौ–जगणलघू क्रमात्–प्रतिपदं प्रयोजितौ भवतः, तदा तु गुच्छकं नाम चण्डवृत्तं विभावयन्तु–कुर्वन्तु । अत्रोभयत्र स्वार्थे कः ।।३७।। किञ्च–

षोडशार्णं पदं चात्र पदान्यपि च षोडश ।
सानुप्रासानि यमकैरङ्कितानि च गुच्छके ।। ३८ ।।

[व्या०] सुगमम् । यथा–

जय जलदमण्डलीद्युतिनिवहसुन्दर
स्फुरदमलकौमुदीमृदुहसितबन्धुर
व्रजहरिणलोचनावदनशशिचुम्बक
प्रचलतर[1]खञ्जनद्युतिविलसदम्बक
स्मरसमरचातुरीनिचयवरपण्डित
प्रणययुतराधिकापटिमभरभण्डित
क्वणदतुलवंशिका[2]हृतपशुपयौवत
स्थिरसमरमाधुरीकुलरमितदैवत

---

१. गोवि. प्रचुरतर- । २. क. वीशिका ।

ग्रथितशिखिचन्द्रकस्फुटकुटिलकुन्तल
श्रवणतट[1]सञ्चरन्मणिमकरकुण्डल
प्रथित तव[2] ताण्डवप्रकटगतिमण्डल
द्विजकिरणधोरणीविजितसिततण्डुल
स्फुरित तव दाडिमीकुसुमयुतकर्णक[3]
छदनवरकाकलीहृतचटुलतर्णक
[4]प्रकटमिह मामके हृदि वससि माधव
स्फुरसि ननु संततं सकलदिशि मामव[4]
धीर !

पुंनागस्तबकनिबद्धकेशजूटः,
कोटीरीकृतवरकेकिपक्षकूटः ।
पायान्मां मरकतमेदुरः स तन्वा,
कालिन्दीतटविपिनप्रसूनधन्वा ।[5]
गर्गप्रिय जय भर्गस्तुत रस
सर्गस्थिरनिज-वर्गप्रवणित
धीर !

दनुजवधूवैधव्यव्रतदीक्षाशिक्षणाचार्यः ।
स जयति विदूरपाती मुकुन्द तव शृङ्गनिर्घोषः ।

सविरुदं गुच्छाख्यं चण्डवृत्तम् ।३३।

३४. अथ कुसुमञ्चण्डवृत्तम्

चतुर्भिर्नगणैर्यत्र पदं यमकितं भवेत् ।
अनन्तनेत्रप्रमितं कुसुमं तत्प्रकीर्तितम् ॥ ३९ ॥

[व्या०] अनन्तं—शून्यं नेत्रं—द्वयं ताभ्यां प्रमितं—गणितं पदं यत्र तत्, विंशतिपदमित्यर्थः । शेषं सुगमम् ।।३९।।

यथा—

कुसुमनिकरनिचितचिकुर[6]
नखरविजितमणिजमुकुर
सुभटपटिमरमितमथुर
विकटसमरनटनचतुर

---

१. गोवि. श्रवणनट- । २. गोवि. प्रथितनव- । ३. गोवि. स्फुरितवरदाडिमीकुसुमयुग-कर्णक । ४-४. गोवि. पंक्तिद्वयं नास्ति । ५. क. नत्वा । ६. गोवि. रचितचिकुर ।

समदभुजगदमनचरण
निखिलपशुपनिचयशरण[1]
[2]अमलकमलविशदचरण
सकलदनुजविलयकरण[2]
मुदितमदिरमधुरनयन
शिखरिकुहररचितशयन
रमितपशुपयुवतिपटल
मदनकलहघटनचटुल
विषमदनुजनिवहमथन
भुवनरसदविशदकथन
कुमुदमृदुलविलसदमल-
हसितमधुरवदनकमल
मधुपसदृशविचलदलक
मसृणघुसृणकलिततिलक
निभृतमुषितमथितकलश
सततमजित मनसि विलस
धीर !

सखि! चातकजीवातुर्माधव सुरकेकिमण्डलोल्लासि ।
तव दैत्यहंसभयदं शृङ्गाम्बुदगर्जितं जयति ॥

पुरुषोत्तम वीरव्रत यमुनाद्भुततीरस्थित
मुरलिध्वनिपूरक्रिय सुरभीव्रजनादप्रिय !
वीर !

जगतीसभावलम्बः स तव जयत्यम्बुजाक्ष दोःस्तम्भः ।
रभसाद्विभेद दनुजान् प्रतापनहरिर्यतोऽभ्युदितः ॥

सविरुदं कुसुममिदम् ।३४।

एते महाकलिकारूपस्य चण्डवृत्तस्य नवभिर्मताः[3] प्रभेदाः । इत्येवं चतुस्त्रिंशतिः ३४ प्रभेदाः ।

[4]इति श्रीवृत्तमौक्तिके विरुदावल्यां महाकलिकारूप-पुरुषोत्तमादिकुसुमान्तं[4] सविरुदमवान्तरं चण्डवृत्तप्रकरणं द्वितीयम् ।२।

---

१. क. चरण । २-२. गोवि. पंक्तिद्वयं नास्ति । ३. ख. नवगर्भिताः । ४-४. पंक्तिरियं नास्ति क. प्रतौ ।

## [ विरुदावल्यां तृतीयं त्रिभङ्गी-कलिकाप्रकरणम् ]

### १. अथ दण्डकत्रिभङ्गी कलिका

अथ त्रिभङ्गीकलिकासु दण्डकत्रिभङ्गीकलिकार्गभितं तद्गतैव[1] लक्ष्यते। तद्भङ्गानां[2] बाहुल्यादेवास्याः कलिकायाः दण्डकत्रिभङ्गीति संज्ञा।

अथाऽस्या लक्षणं सम्यक् सोदाहरणमुच्यते।
भङ्गबाहुल्यतश्चास्या संज्ञाप्यान्वर्थिका[3] भवेत् ॥१॥

यथा–

नगणयुगलादनन्तरमिह चेद् रगणा भवन्ति रन्ध्रमिताः।
विरुदावल्यां कलिका कथितेयं दण्डकत्रिभङ्गीति ॥ २ ॥

[व्या०] रन्ध्राणि–नव कथिता इत्यत्र तदित्यध्याहारः। भङ्गबहुत्वाच्चास्याः दण्डकत्रिभङ्गी संज्ञेति फलितोऽर्थः। अत्र च पदरचनायां पदविन्यासः स्वेच्छया भवतीति सिंहावलोकनरीत्यावगन्तव्यम्। यथा–

चित्रं मुरारे सुरवैरिपक्ष-
स्त्वया समन्तादनुबद्धयुद्धः।
अमित्रमुच्चैरविभिद्य भेदं,
मित्रस्य कुर्वन्नमितं[4] प्रयाति ॥

श्रितमघजलधेर्वहित्रं चरित्रं सुचित्रं विचित्रं
फणित्रं समित्रं पवित्रं लवित्रं रुजाम्।
जगदपरिमितप्रतिष्ठं पटिष्ठं बलिष्ठं गरिष्ठं
[5]अदिष्ठं सुनिष्ठं लघिष्ठं दविष्ठं[5] धियाम्।
निखिलविलसितेऽभिरामं सरामं मुदा मञ्जुदाम-
न्नभामं ललामं धृतामन्दधामं नये।
मधुमथनहरे मुरारे पुरारेरपारे ससारे
विहारे सुरारेरुदारे च दारे प्रभुम्।
स्फुरितमिनसुतातरङ्गे विहङ्गेशरङ्गेण गङ्गे-
ऽष्टभङ्गे भुजङ्गेन्द्रसङ्गे सदङ्गेन भोः।

---

१. ख. अन्तर्गतैव। २. क. तद्भानां। ३. ख. संज्ञाप्यान्वर्थिकी। ४. गोवि. कुर्वन्नमृतं। ५-५. गोवि. वरिष्ठं अदिष्ठं सुनिष्ठं दविष्ठं।

शिखरिवरदरीनिशान्तं प्रयान्तं सकान्तं विभान्तं
　　नितान्तं च कान्तं प्रशान्तं कृतान्तं द्विषाम् ।
दनुजहर भजाम्यनन्तं सुदन्तं नुदन्तं दृगन्तं
　　हसन्तं 'भजन्तं चरन्तं'[1] भवन्तं सदा ।

वीर !

पीत्वा बिन्दुकणं मुकुन्द भवतः सौन्दर्यसिन्धोः सकृत्-
　　कन्दर्पस्य वशं गता विमुमुहुः के वा न साध्वीगणाः ।
दूरे राज्यमयन्त्रितस्मितकला भ्रूवल्लरीताण्डव-
　　क्रीडापाङ्गतरङ्गितप्रभृतयः कुर्वन्तु ते विभ्रमाः ॥

चारुतट - रासनट
गोपभट पीतपट
पद्मकर दैत्यहर
कुञ्जचर वीरवर
नर्ममय कृष्ण जय

नाथ !

संसाराम्भसि दुस्तरोर्मिगहने गम्भीरतापत्रयी-
कुम्भीरेण गृहीतमुग्रगतिना[2] क्रोशन्तमन्तर्भयात् ।
दीप्रेणाद्य सुदर्शनेन बिबुधक्लान्तिच्छिदाकारिणा,
चिन्तासन्ततिरुद्धमुद्धर हरे मच्चित्तदन्तीश्वरम् ।

इति सविरुदा दण्डकत्रिभङ्गी कलिका ।१।

२. अथ सम्पूर्णा विदग्धत्रिभङ्गी कलिका

अथापरा सम्पूर्णा विदग्धत्रिभङ्गी कलिका लक्ष्यते । यथा—

युग्मे भङ्गस्तनौ त्र्युक्तौ भौ चान्ते यत्र मित्रितौ ।
वसुसंख्यं परे ह्यत्र[3] पदे सा स्यात् त्रिभङ्गिका ॥ ३ ॥
विदग्धपूर्वा सम्पूर्णा कलिकाऽतिमनोहरा ।
आद्यान्ताशीःपद्ययुक्ता—

[व्या०] एतद् युक्तं भवति । यत्र पदे—यस्यां कलिकायां वा युग्मे—द्वितीयाक्षरे भङ्गो भवति । तथा तनौ—तगणनगणौ स्तः । तौ च त्र्युक्तौ—वारत्रयमुक्तौ चेत् । अन्ते—तना त्रयान्ते[4] मित्रितौ—

---

१. गोवि. वसन्तं भजन्तं । २. गोवि. मतिना । ३. ख. भवेद् यत्र । ४. ख तनत्रयान्ते ।

संलग्नौ भौ–भगणौ च यदि स्तः। यत्र चैवंविधं वसुसंख्यं पदं भवेत्, सा विदग्धपूर्वा–विदग्ध-शब्दपूर्वा सम्पूर्णा प्रथमलक्षितलक्षणविलक्षणा अतिमनोहरा विदग्धत्रिभङ्गीकलिका स्यात् इत्यन्वयः। अष्टपदत्वमेव पूर्वोक्तायाः सकाशात् वैलक्षण्यं स्फुटमेव लक्षयति। एतदेव चास्याः सम्पूर्णत्वमिति। किञ्च, आद्यन्तयोः कलिकाया इति शेषः, आशीःपद्ययुक्ता–आशीःपद्याभ्यां युक्ता आशीर्वादयुक्तपद्याभ्यां संयुक्ता इत्यर्थः। आद्यन्तपदसाहित्यं च तत्कलिकायुक्तेषु पूर्वोक्तेषु सर्वेषु चण्डवृत्तेषु ज्ञेयं सुधीभिरित्युपदेशरहस्यं, अग्रेपि तथैव वक्ष्यमाणत्वादिति। इयमेव च खण्डावलीति व्यपदिश्यते, तथा चाग्रे तथैव लक्षयिष्यमाणत्वादिति। यथा–

उद्वेलत्कुलजाभिमानविकचाम्भोजालिशुभ्रांशवः[1]
केलीकोपकषायिताक्षिललनामानाद्रिदम्भोलयः।
कन्दर्पज्वरपीडितव्रजवधूसन्दोहजीवातवो,
जीयासुर्भवतश्चिरं यदुपते स्वच्छाः कटाक्षच्छटाः॥[2]

चण्डीप्रियनत चण्डीकृतबलरण्डीकृतखलवल्लभ वल्लव
पट्टाम्बरधर भट्टारक वककुट्टाक ललितपण्डितमण्डित
नन्दीश्वरपति-नन्दीहितभर संदीपितरससागर नागर
अङ्गीकृतनवसङ्गीतक वर-भङ्गीलवहृतजङ्गमलङ्गिम
गोत्राहितकर गोत्राहितदय गोत्राधिपधृतिशोभनलोभन
वन्यास्थितवहुकन्यापटहर धन्याशयमणिचोर मनोरम
शम्पारुचिपट सम्पालितभव-कम्पाकुलजन फुल्ल समुल्लस
उर्वीप्रियकर खर्वीकृतखल दर्वीकरपतिगर्वितपर्वत
वीर !

पिष्ट्वा सङ्ग्रामपट्टे पटलमकुटिले[3] दैत्यगोकण्टकानां,
क्रीडालोठीविघट्टैः स्फुटमरतिकरं नैचिकीचारकाणाम्[4]।
वृन्दारण्यं चकाराखिलजगदगदङ्कारकारुण्यकारो[5],
यः सञ्चारोचितं वः सुखयतु स पटुः कुञ्जपट्टाधिराजः।

पिच्छलसद्घननीलकेश
चन्दनचर्चितचारुवेश
खण्डितदुर्जनभूरिमाय,
मण्डितनिर्मलहारिकाय।
धीर !

---

१. क. शुभ्रांशनः। २. गोवि. पद्यं नास्ति। ३. क. पटलमकुलिते। ४. गोवि. चारुकाणाम्। ५. गोवि. कारुण्यधारः

गीर्वाणं स्फुटमखिलं विवर्द्धयन्तं,
निर्वाणं दनुजघटासु संघटय्य ।
कुर्वाणं व्रजनिलयं निरन्तरोद्यत्-
पर्वाणं मुरमथन स्तुवे भवन्तम् ॥

**द्वितीया सम्पूर्णा सविरुदा विदग्धत्रिभङ्गी कलिका ।२।**

एते चण्डवृत्तस्य गर्भितान्तर्गताः प्रभेदाः ।

**अथ मिश्रिताः**

तत्र-

**३. मिश्रकलिका**

—मिश्रिता चाथ कथ्यते ॥ ४ ॥
आद्यन्ताशीःपद्ययुक्ता गद्याभ्यां चापि संयुता ।
मध्यतः कलिका कार्या सदण्डैर्भनजैर्गणैः ॥ ५ ॥
विरुदेनान्विता चापि रमणीयतरा मता ।
षट्पदा सापि विज्ञेया छन्दःशास्त्रविशारदैः ॥ ६ ॥

[व्या०] अस्यार्थः—अथ–विदग्धत्रिभङ्गीकलिकानन्तरं मिश्रिता-मिश्राकलिका कथ्यते–उच्यत इत्यर्थः । तां विशिनष्टि—कलिकाया आद्यन्तयोराशीःपद्याभ्यां युक्ता, तथा आद्यन्तयोरेव गद्याभ्यां च संयुता मध्यतस्तयोरित्यर्थः, कलिका कार्या । कलिकां विशिनष्टि - सदण्डैः-दण्डो लघुः[1] तत्सहितैः भनजैः–भगणनगणजगणैरन्विता-संयुक्ता इत्यर्थः ॥४-५॥

तथा विरुदेन चाप्यन्विता । अतएवातिरमणीयतरा मता–सम्मता । साऽपि च छन्दः-शास्त्रविशारदैः षट्पदा विज्ञेया इत्युपदिश्यत इति वाक्यार्थः । विरुदसाहित्यं च विदग्ध-त्रिभङ्गीकलिकालक्षणकारिकायामप्यवधेयं सुधीभिरिति शिवम् ॥६॥

अत्र चादौ आशीःपद्यं, ततो गद्यं, ततश्च षट्पदीकलिका, तदनन्तरमपि गद्यं, ततो विरुदं, अनन्तरमपि गद्यमेव । ततोपि विरुदं धीरं सम्बोधनोपलक्षितं, सर्वान्ते चाशीःपद्यम्, इति क्रमेणोक्तलक्षणोपलक्षिता मिश्रा कलिका कार्या, इति फलितोऽर्थः ।

यथा-

उदञ्चदतिमञ्जुलस्मितसुधोर्मिलीलास्पदं,
तरङ्गितवराङ्गनास्फुरदनङ्गरङ्गाम्बुधिः ।
दृगिन्दुमणिमण्डलीसलिलनिर्झरस्यन्दनो,
मुकुन्द मुखचन्द्रमास्तव तनोतु शर्म्मातुलम् ।[2]

---

१. क. लघ्वः । २. गोवि. तनोति शर्माणि नः ।

दुष्टदुर्दमारिष्टकण्ठीरवकण्ठविखण्डनखेलदष्टापद नवीनाष्टापदविस्पर्द्धिपदाम्बरपरीत गरिष्ठगण्डशैलसपिण्डवक्षःपट्ट पाटव—

दण्डितचटुलभुजङ्गम
कन्दुकविलसितलङ्घिम
भण्डिल[1] विचकिल[2] मण्डित
सङ्गरविहरणपण्डित
दन्तुरदनुजविडम्बक
कुण्ठितकुटिलकदम्बक ।

खचिताखण्डलोपलविराजदण्डजराजमणिम[य][3] कुण्डलमण्डितमञ्जुलगण्डस्थलविशङ्कटभाण्डीरतटीताण्डवकलारञ्जितसुहृन्मण्डल

नन्दविचुम्बित-कुन्दनिभस्मित
गन्धकरम्बित शन्दविवेष्टित
तुन्दपरिस्फुर-दण्डकडम्बर ।

[4]दुर्जनभोजेन्द्रकण्टककण्ठकन्दोद्धरणो[4]द्दामकुद्दाल विनम्रविपद्दारुणध्वान्तविद्रावणमार्तण्डोपमकृपाकटाक्ष शारदचन्द्र[5]मरीचिमाधुर्यविडम्बितुण्डमण्डल

लोष्ठीकृतमणि-कोष्ठीकुलमु[नि-
गोष्ठीश्वर मधुरोष्ठीप्रिय पर-
मेष्ठी][6]डित परमेष्ठीकृतनर
धीर !

उपहितपशुपालीनेत्रसारङ्गतुष्टिः,
प्रसरदमृतधाराधोरणीधौतविश्वा ।
पिहितरविसुधांशुः प्रांशुतापिञ्छरम्या,
रमयतु बकहन्तुः[7] कान्तिकादम्बिनी वः ।

इति मिश्रकलिका ।३।

अयं चण्डवृत्तस्य मिश्रितः प्रभेदः । एवमन्येपि ।

इति विरुदावल्यां चण्डवृत्तमेव दण्डकत्रिभङ्ग्याद्यवान्तर-
त्रिभङ्गीकलिका प्रकरणं तृतीयम् ।३।

इति श्रीवृत्तमौक्तिके वार्त्तिके सलक्षणं चण्डवृत्तप्रकरणं समाप्तम् ।१।

---

१. ख. तण्डिल । २. क. विचकित । ३. गोवि. मणिम[य]नास्ति । ४. गोवि. दुर्जनभोजेन्द्रकटककदम्बोद्धरणो । ५. गोवि. शारदाचण्ड- । ६ [-] कोष्टगंतोंशो नास्ति क. प्रतौ । ७. क. ख. बहकंतुः ।

## [ विरुदावल्यां साधारणमतं चण्डवृत्तं चतुर्थप्रकरणम् ]

### अथ साधारणं चण्डवृत्तम्

तत्र–

स्वेच्छया तु कलान्यासः साधारणमिदं मतम् ।
न च सप्तदशादूर्ध्वं न वर्णत्रितयादधः ।। १ ।।
क्रियते यैर्गणैराद्यान्तैरेव सकलाः कलाः ।
प्रस्वादिवर्णसंयोगेप्यत्र वर्णस्य लाघवम् ।। २ ।।

[व्या०] अस्यार्थः—स्वेच्छया इत्यादि सुगमम् । तत्राक्षरनियममाह—न चेति । न च सप्तदशवर्णादूर्ध्वं न वा वर्णत्रितयादधः कला कार्या इति शेषः । किञ्च नियमान्तरमाह—क्रियत इति । आद्यात्– [illegible] ति् यैरेव गणैः कलाप्रारम्भः क्रियते तैरेव सकला अपेक्षिताः कलाः कर्त्तव्या इति शेषः । अपि च 'प्रस्वादीति' प्रस्वेति आदिशब्देन-ङ्ग-ग्र स्फु-स्मि-स्म-क्वेत्यादीनां संयुक्तानां वर्णानां संयोगेपि सति अत्र छन्दःशास्त्रे तत्प्रकरणस्थले वा पूर्वपूर्ववर्णस्य लाघवं–लघुत्वं अवगन्तव्यमित्युत्सर्गः ।

तत्र अक्षरे, यथा–

अङ्गण रिङ्गण ।

इत्यादि । संयुक्ते, यथा–

प्रणयप्रवण ।

इत्यादि । एवं गणान्तरेपि बोद्धव्यम् ।

चतुर्वर्णे सर्वलघौ यथा–

विधुमुख कृतमुख ।

इत्यादि । एवं प्रस्तारान्तरेपि सर्वलघ्वादिस्थले स्वेच्छातः कलान्यासोद्रष्टव्यः ।

मात्रावृत्ते, यथा–

चतुष्कलद्वयेनापि कला जगणवर्जिताः ।

[व्या०] कर्त्तव्या इति शेषः । यथा—

तारापतिमुख सारायितमुख ।

इत्यादि ।

प्रस्तारद्वितयेप्येवं कलान्यासः स्वतः स्मृतः ।।३।।

[व्या०] स्वतः–स्वेच्छातो भवतीति स्मृत इत्यर्थः ।।३।।

साधारणमतं चैतद् दिङ्मात्रमिह दर्शितम् ।
विशेषस्तत्र तत्रापि नोक्तो विस्तारशङ्कया ।। ४ ।।

[व्या०] तत्र तत्रापीति–तत्तत्प्रस्तारेषु इत्यर्थः ।।४।।

इति विरुदावल्यामवान्तरं साधारणमतं चण्डवृत्त-प्रकरणं चतुर्थम् ।४।

### १. अथ साप्तविभक्तिकी कलिका

स्तुतिर्विधीयते विष्णोः सप्तभिस्तु विभक्तिभिः ।
यत्र सा कलिका सद्भिर्ज्ञेया साप्तविभक्तिकी ॥ १ ॥
अथोच्यते विभक्तीनां लक्षणं कविसम्मतम् ।
तत्तद्गणोपनिहितं यथाशास्त्रमतिस्फुटम् ॥ २ ॥
भसौ तु घटितौ यत्र प्रथमा सा प्रकीर्तिता ।
नयाभ्यां तु द्वितीया स्यात् तृतीया ननसा लघुः ॥ ३ ॥
त्रिभिस्तैस्तु चतुर्थी स्यात् यत्र यौ पञ्चमी तु सा ।
ताभ्यां तु षष्ठी विज्ञेया यत्र सौ सप्तमी तु सा ॥ ४ ॥
विहाय प्रथमा ज्ञेया सर्वाः साधारणे मते ।
स्थितास्तु गणसाम्येन स्वेच्छयैव यतः[1] कलाः ॥ ५ ॥
उदाहरणमेतासां क्रमतो वृत्तमौक्तिके ।
कथ्यते कविसन्तोषहेतवे* हरिकीर्त्तनैः ॥ ६ ॥

[व्या०] सुलभार्थास्तु कारिका इति न व्याख्यायन्ते । क्रमेणोदाहरणानि, यथा–

यः स्थिरकरुण-स्तर्जितवरुणः ।
तर्पितजनकः सम्मदजनकः ॥ १ ॥
प्रणतविमायं जगुरनपायम् ।
घनरुचिकायं सुकृतिजना यम् ॥ २ ॥
सुजनकलितकथनेन प्रबलदनुजमथनेन ।
प्रणयिषु रतमभयेन प्रकटरतिषु किल येन ॥ ३ ॥

यस्मै परिध्वस्तदुष्टाय चक्रुः स्पृहां माल्यदुष्टाय[2] ।
दिव्याः स्त्रियः केलितुष्टाय कन्दर्परङ्गेण पुष्टाय ॥ ४ ॥

धृतोत्साहपूराद् द्युतिक्षिप्तसूरात् ।
यतोऽरिर्विदूराद् भयं प्राप शूरात् ॥ ५ ॥
यस्योज्वलाङ्गस्य सञ्चार्यपाङ्गस्य ।
वेणुर्ललामस्य हस्तेऽभिरामस्य ॥ ६ ॥
स्मितविस्फुरिते-ऽजनि यत्र हिते ।
रतिरुल्लसिते सदृशां ललिते ॥ ७ ॥

इति सप्तविभक्तयः ।*

---

*-* . चिह्नान्तर्गतोयमंशो नास्ति ख. प्रतौ । १. ख. यता । २. गोवि. जुष्टाय ।

***अथ सम्बुद्धिः**

तनौ [तु] घटितौ यत्र तत्सम्बोधनमीरितम् ।
एवं सम्बोधनान्तेयं विभक्तिः सप्तकीर्त्तिता ।। ७ ।।

यथा–

स त्वं जय ! जय ! दुष्टप्रतिभय !
भक्तस्थितदय[1] ! लुप्तव्रजभय ! ।। ८ ।।
वीर !
मित्रकुलोदित नर्मसुमोदित
रञ्जितराधिक शर्म्मभराधिक ।

विरुदमिदम्—

धीर !
हंसोत्तमाभिलषिता सेवकचक्रेषु दर्शितोत्सेका ।
मुरजयिनः कल्याणी करुणाकल्लोलिनी जयति ।

**इति साप्तविभक्तिकी कलिका ।१।**

**२. अक्ष अक्षमयी कलिका**

अकारादि-क्षकारान्त-मातृकारूपधारिणी ।
विष्णोः स्तुतिपरा सेयं, कलिकाऽक्षमयी मता ।। ८ ।।
अत्र स्युस्तु*रगाः सर्वे गणाः जगणवर्जिताः ।
मातृकावर्णघटिताः क्रमात् भगवतः स्तुतौ ।। ६ ।।

**[व्या०] अस्यार्थः— अत्राक्षमयी भगवतः स्तुतौ सर्वे तुरगाः—चतुष्कलाः कर्ण-द्विजगण-भगण-सगणाः, जगणवर्जिता गणाः क्रमात् मातृकावर्णेषु यथायथं घटिताश्चेत् स्युस्तदा पूर्वोक्तविशेषण-विशिष्टा सेयं अक्षमयी कलिका मता–सम्मता इति पूर्वश्लोकेन अन्वयः । मात्रावृत्ते तु 'चतुष्कल-द्वयेनापि कलाजगणवर्जिताः' इत्यत्रैव उक्तत्वाद् अक्षमयीमात्रावृत्तमेवेति युक्तितः समुत्प-श्यामः । सर्वत्र च मात्रावृत्तेष्वेव जगणस्य हेयत्वेन निर्देशाच्च । यथा–**

मधुरेश ! माधुरीमय माधव मुरलीमतल्लिकामुग्ध ।
मम मदनमोहन मुदा मर्दय मनसो महामोहम् ।।
अच्युत जय जय आर्त्तकृपामय ।
इन्द्रमखार्द्दन ईतिविशातन ।। १ ।।
उज्ज्वलविभ्रम ऊर्जितविक्रम ।
ऋद्धिधुरोद्धुर[2] ऋभुदयापर ।। २ ।।

---

**१. गोवि. भक्तस्थिरदय । २. गोवि. धुरोद्धर । *-*चिह्नगतोंऽशो नास्ति ख. प्रतौ ।**

लॄदिवक्त्रपेक्षित लॄवदलक्षित ।
एधितवल्लव ऐन्दवकुलभव ॥ ३ ॥
ओजःस्फूर्जित औग्र्यविवर्जित ।
अंसविशङ्कट अष्टापदपट ॥ ४ ॥.

इति षोडशस्वरादयः ।

अथ कादयः पञ्चवर्गाः

कङ्कणयुतकर खण्डितखलवर[1] ।
गतिजितकुञ्जर घनघुसृणाकर[2] ॥ ५ ॥
ङुतमुरलीरत चलचिल्लीलत ।
छलितसतीशत जलजोद्भवनत[3] ॥ ६ ॥
झषवरकुण्डल ञोङूयितदल ।
टङ्कितभूधर ठसमाननवर[4] ॥ ७ ॥
डमरघटाहर ढक्कितकरतल ।
णखरधृताचल तरलविलोचन ॥ ८ ॥
थूत्कृतखञ्जन दनुजविमर्द्दन ।
धवलावर्द्धन नन्दसुखास्पद ॥ ९ ॥
पङ्कजसमपद फणिनुतिमोदित ।
बन्धुविनोदित भङ्गुरितालक ॥ १० ॥
मञ्जुलमालक—

इति कादिपञ्चवर्गाः ।

अथ यादयः

—यष्टिलसद्भुज
रम्यमुखाम्बुज ललितविशारद ॥ ११ ॥
वल्लवरङ्गद शर्म्मदचेष्टित ।
षट्पदवेष्टित सरसीरुहधर ॥ १२ ॥
हलधरसोदर क्षणदगुणोत्कर ॥ १३ ॥

इति यादयः ।

वीर ।

---

१. क. खलधर । २. गोवि. घनघुसृणाम्बर । ३. गोवि. जलजोद्भवनुत । ४. गोवि. ठनिभाननवर ।

कर्णे कल्पितकर्णिकः कलिकया कामायितः कान्तिभिः,
कान्तानां किलकिञ्चितं किसलयं कीलालधिः कीर्त्तिभिः ।
कुर्वन् कूर्दनकानि केशरितया कैशोरवान् कोटिशः,
कोपीकौकुलकंसकुष्टक्कतिकः[1] कृष्णः क्रियात् कांक्षितम् ।
सौरीतटचर गौरीव्रतपर-
गौरीपटहर चौरीकृतकर ।
धीर !
प्रेमोरुहट्टहिण्डक कक्खटसुभटेन्द्रकण्ठकुट्टाक ।
कुरु कौंकुमपट्टाम्बर भट्टारक ताण्डवं हृदि[2] मे ।।
इति अक्षमयी कलिका ।२।

३. अथ सर्वलघुककलिका

अथ सर्वलघुकं कलिकाद्वयं युगपदेव लक्ष्यते । तत्र–

नगणैर्पञ्चभिर्यत्र लघ्वन्तैर्वापि तैः पुनः ।
क्रमेण पञ्चदशभिर्वर्णैः षोडशभिस्तथा ।। १० ।।
प्रस्तारद्वयमन्त्यं स्याल्लघुभिः सकलाक्षरैः ।
तत्सर्वलघुकं प्रोक्तं कलिकाद्वयमुत्तमम् ।। ११ ।।

[व्या०] अस्यायमर्थः—यत्र पञ्चभिः–पञ्चसंख्याकैर्नगणैः–त्रिलघुकैर्गणैः पदं यत्र, च–पुनः लघ्वन्तैर्वापि तैरेव पञ्चभिर्नगणैः–क्रमेण पञ्चदशभिर्वर्णैः षोडशभिर्वा पदं भवति । वा शब्देन सप्तदशाक्षरमपि पदं कर्त्तव्यम् । एतदूर्ध्वं तु न कर्त्तव्यमेवेत्युपदेशः । न च सप्तदशादूर्ध्वमित्यत्रैव निषेधस्य उक्तत्वात् । स्वेच्छया कलान्यासस्तु सप्तदशवर्णपर्यन्तमेव साधारणमते चमत्कारकारी नैतदूर्ध्वमिति, प्रस्तारद्वयेपि सर्वलघुभिस्समस्तैर्वर्णैर्यदन्त्यं प्रस्तारद्वयं भवति तत् सर्वलघुकमुत्तमं कलिकाद्वयं भवतीत्यर्थः ।

तत्र पञ्चदशाक्षरी सर्वलघुका कलिका यथा–

गोपस्त्रीविद्युदालीवलयितवपुषं नन्दगोपादिकेकि-
व्यूहानन्दैकहेतुं दनुजशतभयोद्दामदावाग्निशत्रुम् ।
ईषद्धास्याम्बुधारावितरणभृतसद्बन्धुचेतस्तडागं,
चित्तं श्रीकृष्ण मेऽद्य श्रय शरणमहो दुःखदाहोपशान्त्यै[3] ।
चरणचलनहतजठरशकटक[4]
रजकदलन वशगतपरकटक

१. गोविं. कौपीकौकुरकंसकष्टक्कतिकः । २. क. ब्रूहि । ३. गोवि. पूर्णपद्यं नास्ति ।
४. गोवि. जरठशकटक ।

नटनघटनलसदगवरकटक
सकनकमरकतमयनवकटक ।। १ ।।

इति पञ्चदशाक्षरी सर्वलघुका कलिका ।

अथ षोडशाक्षरी सर्वलघुका कलिका

कपटरुदितनटदकठिनपदतट-
विघटितदधिघट निबिडितसुशकट
रुचितुलितपुरटपटलरुचिरपट-
घटितविपुलकट[1] कुटिलचिकुरघट ।
रविदुहितृनिकटलुठदजठरजट-[2]
विटपनिचितवटतटपटुतरनट-
निजविलसितहठविचटितसुविकट-
चटुलदनुजभट[3] जय युवतिषु शठ ।
धीर !

स्फुटनाटचकडम्वदण्डित-द्रढिमोड्डामर[4]दुष्टकुण्डली ।
जय गोष्ठकुटुम्वसंवृतस्त्वमिडाडिम्वकदम्वडुम्वक ।।

रशनमुखर सुखरनखर
दशनशिखर-विजितशिखर ।
वीर !

विवृतविविधवाधे भ्रान्तिवेगादगाधे,
धवलित[5]भवपूरे मज्जतो मेऽविदूरे ।
अशरणगणवन्धो हा[6] कृपाकौमुदीन्दो,
सकृदकृतविलम्वं देहि हस्तावलम्बम् ।।
नामानि प्रणयेन ते सुकृतिनां तन्वन्ति तुण्डोत्सवं,
धामानि प्रथयन्ति हन्त जलदश्यामानि नेत्राञ्जनम् ।
सामानि श्रुतिशष्कुलीं मुरलिकाजातान्यलंकुर्वते,
कामा निर्वृतचेतसामिह विभो ! नाशापि नः शोभते ।।

इति षोडशाक्षरी सर्वलघुका कलिका ।३।

---

१. गोवि. विपुलघट । २. गोवि. जरठजट । ३. गोवि. चटुलदनुजघट । ४. क. घटितोडामर । ५. गोवि. बलवति । ६. गोवि. हे ।

अथ सर्वासु कलिकासु स्थितानां विरुदानां युगपदेव लक्षणमुच्यते—

वसुषट्पंक्तिरविभिर्मनुभिश्चापि सर्वतः ।
कलिकासु कविः कुर्याद् विरुदानां तु कल्पनम् ॥ १२ ॥

[व्या०] अस्यार्थः—सर्वासु कलिकासु वस्वादिभिः पञ्चभिः संख्यासंकेतैश्चकारोक्तैरपि कविर्विरुदानां कल्पनं कुर्यात् । तथा हि—कस्यांश्चित् कलिकायामष्टकलिकं विरुदं, कस्यांश्चित् षट्कलिकं विरुदं, अपरस्यां दशकलिकं विरुदं, अन्यस्याञ्च द्वादशकलिकं विरुदं, कस्यांश्चित् कलिकायां चतुर्दशकलिकं विरुदम् । कुत्रापि चकारोपदिष्टं च विरुदत्रितयमिति क्रमेण सर्वत्र विरुदकल्पनं कविना कार्यमित्युपदिश्यते ॥१२॥

किञ्च—

धीर-वीरादिसंबुद्धया कलिका विरुदादिकम् ।
देव-भूपतितत्तुल्यवर्णनेषु प्रयोजयेत् ॥ १३ ॥
संस्कृतप्राकृतश्रव्यैः शौर्यवीर्यदयादिभिः ।
कीर्त्तिप्रतापप्राधान्यैः कुर्वीत कलिकादिकम् ॥ १४ ॥

[व्या०] सुगमम् ॥१३, १४॥

अपि च—

गुणालङ्कारसहितं सरसं रीतिसंयुतम् ।
मैत्र्यानुप्राससच्छब्दाडम्बरं[1] जीवितं द्वयोः ॥ १५ ॥

[व्या०] द्वयोः—कलिकाविरुदयोरित्यर्थः ॥१५॥

कलिकाश्लोकविरुदत्रिकं त्रिंशत्त्रिकावधि ।
पञ्चत्रिकोर्ध्वं विरुदावली कविभिरिष्यते ॥ १६ ॥

[व्या०] अस्यार्थः—अस्यां कारिकायां सम्पूर्णां विरुदावलीं लक्षयति—विरुदावली तावत् कलिकाश्लोकविरुदैस्त्रिभिः सम्पद्यते । तत्र कलिकाश्लोकविरुदमिति त्रिकं, पञ्चत्रिकोर्ध्वं—पञ्चत्रिकं, पञ्चदश तदूर्ध्वं एतदारभ्य इत्यर्थः । कियदवधीत्यपेक्षायामुच्यते—त्रिंशत्त्रिकावधि—त्रयस्त्रिंशावधिश्चेत् क्रियते तदा अखण्डा विरुदावली भवति । एतादृशी विरुदावली कविभिरिष्यते कर्त्तुं यत्यत इत्यर्थः । यथा श्रुतव्याख्याने तु महती विरुदावली स्यात् । तथा च पञ्चदशादारभ्य त्रिंशत्त्रिकं नवतिस्सम्पद्यते, तत्पर्यन्तं सति महती विरुदावली भवतीति । संकोचात्तथा व्याख्यातमस्माभिरिति सर्वं समञ्जसम् ॥१६॥

क्वचित्तु कलिकास्थाने केवलं गद्यमिष्यते ।
पदमाद्यन्तयोराशीः प्रधानं सुमनोहरम् ॥ १७ ॥
त्रिचतुःपञ्चकलिकाः श्लोकास्तावन्त एव हि ।

---

१. ख. छन्दाडम्बरं ।

[व्या०] इति, सार्द्धेन श्लोकेन विरुदावलीलक्षणे कस्यचिन्मतं उपन्यस्यति। क्वचित्तु– कस्यांश्चित् कलिकायां–कलिकास्थाने गद्यमेवोभयत्र केवलं सविरुदं वा भवतीतीष्यते। किञ्च, आद्यन्तयोः–कलिकाविरुदयोः, आशीःप्रधानं–आशीर्वादोपलक्षितं पद्यमतिसुमनोहरं भवतीति च[1] ॥१७॥

[व्या०] कियन्त्यः कलिकाः, कियन्तश्च श्लोकाः कार्या इत्यपेक्षायामुच्यते – त्रिचतुः-पञ्चकलिकाः स्वेच्छया कर्त्तव्याः। श्लोका अपि तावन्त एव हि स्वेच्छयैव विधेया इत्युपदेशः[2]।

एतत् सर्वं यथास्थानमस्माभिः समुदाहृतम् ॥ १८ ॥

[व्या०] सुगमम् ॥१८॥

विरुदावलीपाठफलमुपदिशति––

रम्यया विरुदावल्या प्रोक्तलक्षणयुक्तया।
स्तूयमानः प्रमुदितः श्रीगोविन्दः[3] प्रसीदति ॥ १९ ॥

श्रीः[4]

इति श्रीवृत्तमौक्तिके वार्त्तिके विरुदावली-
प्रकरणं नवमम् ॥९॥

---

१. ख. 'च' नास्ति। २. ख. इत्युपेक्षायामुच्यते। ३. गोवि. वासुदेवः। ४. ख. 'श्रीः' नास्ति।

# दशमं खण्डावली-प्रकरणम्

**अथ खण्डावली**

आशीःपद्यं यदाद्यन्तयोः[1] स्यात् खण्डावली त्वसौ ।
विनैव विरुदं नानागणभेदैरनेकधा ।। १ ।।

तत्र-

**१. अथ तामरसं खण्डावली**

पदे चेद् रगणः सौ च लघुद्वयनिवेशनम् ।
तदा तामरसं नाम साधारणमते भवेत् ।। २ ।।

[व्या०] अनयोः कारिकयोरयमर्थः । यदा कलिकाया आद्यन्तयोः विरुदं विनैव आशीः-पद्यं भवति तदा नानागणभेदैरनेकधा असौ खण्डावली स्यादित्यन्वयः । किञ्च, तत्र पदे चेत् रगणो भवति, अथ च सौ-सगणौ भवतः, ततो लघुद्वयनिवेशनं-लघुद्वयस्थापनं चेत्-स्यात्तदा साधारणमते स्वेच्छाकलाविन्यासलक्षणे तामरसं इति नाम खण्डावली भवतीति वाक्यार्थः । १-२।।

यथा-

कलक्वणितवंशिकाविकलनागरीसागरी-
भवद्विषमशायकद्विगुणवृद्धिशुभ्रद्युति ।
पतङ्गतनयातटी-वननटी-भवद्विग्रहं,
नवीनघनमण्डलीरुचिरमाविरास्तां महः ।।

देव !

जय वंशीरवोल्लास ! जय वृन्दावनप्रिय ! ।
जय कृष्ण ! कृपाशील! जय लीलासुधाम्बुधे! ।।

वीर !

छन्दसामपि दुर्गमसन्तत-
मिन्दुबिम्बसमानशुभानन !
मन्दहासविकस्वरसुन्दर !
कुन्दकोरकदन्तरुचिद्रज !

---

१. ख. पदाद्यन्तयोः ।

सुन्दरीजनमोहनमन्मथ
चन्दनद्रवरज्यदुरःस्थल
नन्दनालयशीलितसद्गुण-
वृन्द कच्छपरूपसमुद्धृत-
मन्दराचलवाहभुजार्गल-
कन्दलीकृतसारसमर्थ पु-
रन्दरेण चिरं परिवेषितः[1]
नन्दिनाथसमञ्चितदिव्यक-[2]
लिन्दशैलसुताजलजन्यर-
विन्दकाननकोषकदम्बमि-
लिन्दशावक निर्जरनायक
वृन्दया सह कल्पितकौतुक
दन्दशूकफणावलिगञ्जन
चन्द्रिकोज्ज्वलनिर्गलितामृत-
बिन्दुदुर्दिनसूनृतसार मु-
कुन्ददेव कृपाल[3]दशि (दृशि) त्वयि
किं दुरापमिहास्ति ममेश्वर
किं दयावरुणालय दुर्जन-
निन्दयापि जगत्त्रयवल्लभ !
कन्दनीलिमदेहमहः कुरु-
विन्दखण्डजपाकुसुमस्फुरद्
इन्द्रगोपकबन्धुरिताधर
चन्द्रकाद्भुतपिञ्छशिरस्तद-
रिन्दम स्वमतिं दयसे यदि
विन्दते सुखमेन[4]जनस्तव
बन्दिवद्गुणगानकरं ध्रुव-
मिन्दयन् विदितो गरुडध्वज
नन्दयन्निजयासनयानय
नन्दगोपकुमार जयीभव ।
देव !

---

१. ख. परिषेवितः । २. ख. दिव्क । ३. ख. कृपालु । ४. ख. मेव ।

